यागकालः स्यात्परतश्चेत्परेहनि ॥ ” तत्रापि “ संधिर्यदा पराह्णे स्याद्यागं प्रातः परेहनि । कुर्वाणः प्रतिपद्यागे चतुर्थ्येपि न दुष्यती ति”इत्यादिभिर्वचनैर्यागकालं निर्णीय। पर्वदिवसे कृतौ यवसथिकाशनः सपत्नीकः शालायां जघनेनाग्निं रात्रौ जाग्रन् मिश्रइतिहासमिश्रोवा पृथक् शयित्वा प्रातःकृतस्नानसंध्यावंदनप्रातर्होमः स्वाचांतोग्नेः पश्चात् प्राङ्मुखउपविश्य पूर्वोक्तविधिना चरुं श्रपयित्वाज्यभागांते दर्शे दर्शे देवताभ्यः पौर्णमासदेवताभ्यः प्रयोगे वक्ष्यमाणाभ्यश्चरुं हुत्वा ब्रह्मप्रजापतिविश्वेदेवाद्यावापृथिवीभ्यश्चरुं जुहोति ॥ **विश्वेभ्योदेवेभ्योबलिहरणं भूतगृह्येभ्यः आकाशाय च** ॥ बलिहरणं स्थालीपाकादेव विश्वेभ्योदेवेभ्योभूतगृह्येभ्यः । आकाशाय च बलिहरणं बलिदानं । वैश्वदेवस्याग्नौ जुहोति। **अग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्योदेवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति** ॥ वैश्वदेवस्य विश्वेदेवादेवापितृमनुष्यादेवताअस्येति वैश्वदेवः पाकः पंचमहायज्ञार्थं साधितपाकइत्यर्थः । ननु वैश्वदेवस्याग्नौ जुहोतीति विश्वेदेवसंबद्धस्य चरोस्तद्भूतोपात्तस्य वा अग्नौ जुहोतीति कथं नोच्यते। यथावृषोत्सर्गे पौष्णस्य जुहोतीति पूषसंबद्धः पृथगेव पिष्टमयः पूर्वसिद्धश्चरुर्गृह्यते किमिति पंचमहायज्ञार्थः। उच्यते । स्थालीपाकं श्रपयित्वेत्यत्र स्थालीपाकस्यैकवचनांतत्वाद्द्वितीयस्य वैश्वदेवस्य चरोरभावोऽवगम्यते । पौष्णवत् वैश्वदेवस्य सिद्धोपात्तस्य पृथगुपादानं पंचमहायज्ञार्थवैश्वदेवपाकस्य सद्भावान्निवर्त्तते । पंचमहायज्ञार्थस्य वैश्वदेवत्वं कुतइतिचेत् । वैश्वदेवादन्नात्पर्युक्ष्येतिसूत्रात् । अग्नौ जुहोतीति अग्निग्रहणं बलिकर्मतामाभूदिति । अग्नये स्वाहेत्यादिप्रयोग दर्शनार्थं सर्वत्र तस्यैकदेशस्योद्धृत्यासादितप्रोक्षितस्य अग्नये प्रजापतये विश्वेभ्योदेवेभ्योहुत्वा स्थालीपाकाद्वैश्वदेवाच्च अग्नये स्विष्टकृते जुहोति ततः शेषः समाप्तिं विधाय ॥ **बाह्यतः स्त्रीबलिं हराति** ॥

प्रयोगे वक्ष्यमाणैर्नमः स्त्रियइत्यादिभिर्मंत्रैः बाह्यतः शालायाः प्रांगणे स्त्रीबलिं स्त्र्यादिभ्योबलिः स्त्रीबलिस्तं स्त्रीबलिं हरति ददाति शेषमद्भिः प्लाव्य स्थालीस्थितमवशिष्टं चरुं अद्भिर्जलेन प्रप्लाव्य मज्जयित्वा अत्रापः प्रणीताः तासां सर्वकर्मार्थत्वेन प्रणीतत्वात् ततोब्राह्मणभोजनं व्याख्यातं सूत्रार्थः ॥ अथ पक्षादिकर्मोच्यते ॥ तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अमाषममांसं अक्षारालवणं हविष्यं व्रताशनं विधाय रात्रावग्निसमीपे भूमौ दंपती पृथक् शयीयातां प्रातः स्नात्वा संध्यावंदनानंतरं प्रातर्होमं च निर्वर्त्य उदिते सूर्ये पौर्णमासं स्थालीपाकमारभेत् तत्रात्मनः ब्रह्मणः प्रणीतानां चासनचतुष्टयं कुशैर्दत्वा पक्षादिकर्मणाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भव भवामीति तेनोक्ते आसने उपवेश्य अत्रासादने वैश्वदेवान्नासादनं विशेषः तत्प्रोक्षणं च आज्यभागांतं यथोक्तं कर्म निर्वर्त्य स्थालीपाकमभिघार्य स्रुवेण चरुमादाय अग्नये स्वाहा अग्नीषोमाभ्याठं स्वाहा इदमग्नीषोमाभ्यां उपांशु पुनः अग्नीषोमाभ्याठं स्वाहा इदमग्नीषोमाभ्यां उच्चैः ब्रह्मणे स्वाहा इदं ब्रह्मणे प्रजापतये स्वाहा इदं प्रजापतये विश्वेभ्योदेवेभ्यः स्वाहा इदंविश्वेभ्योदेवेभ्यः द्यावापृथिवीभ्याठं स्वाहा इदं द्यावापृथिवीभ्यां हुतशेषं स्रुवेण अग्नेरुत्तरतः प्राक्संस्थं विश्वेभ्योदेवेभ्योनमः इदंविश्वेभ्योदेवेभ्यः भूतगृह्येभ्योनमः इदं भूतगृह्येभ्यः आकाशाय नमः इदमाकाशाय वेति स्रुवेण बलित्रयं दत्वा अभिघारितवैश्वदेवान्नात्स्रुवेणादाय अग्नये स्वाहा इदमग्नये प्रजापये स्वाहा इदं प्रजापतये विश्वेभ्योदेवेभ्यः स्वाहा इदं विश्वेभ्योदेवेभ्यः इत्याहुतित्रयमग्नौ हुत्वा स्थालीपाकोत्तरार्द्धाद्वैश्वदेवोत्तरार्द्धाच्च अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति हुत्वा भूरित्यादि प्राजापत्यांतानवाहुतीर्जुहुयात् संस्रवप्राशनं मार्जनं पवित्रप्रतिपत्तिःन प्रणीताविमोकः ब्रह्मणे

दक्षिणादानांतं कृत्वा चरुशेषमादाय शालायाबहिरुपलिप्तायां भूमौ प्राङ्मुखउपविश्य स्रुवेण नमः स्त्रियै इदं स्त्रियै । नमः पुंऽसे वयसे नमः इदं पुंऽसे वयसे नमः शुक्लाय कृष्णदंताय पापिनां पतये नमोये मे प्रजामुपलोभयंति ग्रामे वसंतउतवाऽरण्ये तेभ्यः इदं ये मे इत्यादि नमोस्तु बलिमेभ्योहरामि स्वस्ति मेस्तु प्रजां मे ददतु इदं स्त्रियै पुंऽसे वयसे वयसे शुक्लाय कृष्णदंताय पापिनां पतये ये मे प्रजामुपलोभयंति ग्रामे वसंतउत वाऽरण्ये तेभ्यः इदमेभ्यइति वा त्यागः शेषं प्रणीताद्भिः प्रक्षाल्याचम्याग्निसमीपमागत्य प्रणीताविमोकं कृत्वा एकस्मै ब्राह्मणाय भोजनं ददामीति संकल्पयेदिति पक्षादिकर्मविधिः । दर्शे पुनरियान्विशेषः । स्थालीपाकेनाग्नये विष्णवे इंद्राग्निभ्यामिति दर्शदेवताभ्योहोमः अनुदिते चारंभः शेषं समानं । "सायमादिप्रातरंतमेकं कर्म प्रचक्षते । पौर्णमासादिदर्शांतमेकमेव विदुर्बुधाः" ॥ इतिवचनात् । कृष्णपक्षे यद्याधानं तदा दर्शमनिष्ट्वैव पौर्णमास्यां पक्षादिकर्मारंभः यत्तुच्छंदोगपरिशिष्टवचनं "ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोपि चाग्रिमः । यआयाति सहोतव्यः सएवादिरिति श्रुतेः" तत्पुनराधानविषयं तच्छाखिविषयं वा ॥ इति पक्षादिप्रयोगः ॥

**सा यदि गर्भं न दधीत सिंऽह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति । इयमोषधी त्रायमाणा सहमाना सरस्वती । अस्याअहं बृहत्याः पुत्रः । पितुरिव नाम जग्रभमिति ॥ १ ॥ ॥ १३ ॥**

**सा यदि गर्भं न दधीत** ॥ सा भार्या यदि चेत् गर्भं न धारयेत् ॥ **सिꣳह्याः श्वेतपुष्प्याउपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिंचति** ॥ गर्भधारणोपायमाह सिꣳह्याः कंटकारिकायाः कथंभूतायाःश्वेतपुष्प्याः श्वेतानि पुष्पाणि यस्याःसा श्वेतपुष्पी तस्याः उपोष्य उपवासं कृत्वा पुष्येण चंद्रमसा युक्तेन पुष्यनक्षत्रेण मूलं शिफां उत्थाप्य उद्धृत्य रजोदर्शनाच्चतुर्थेहनि स्नातायां भार्यायां रात्रौ उदपेषं यथा भवति तथा पिष्ट्वा तन्मूलं उदकेन पिष्ट्वा द्रवीभावमापाद्येत्यर्थः दक्षिणस्यां नासिकायां दक्षिणे नासारंध्रेऽवसिंचति क्षारयति भर्त्ता इयमोषधी त्रायमाणा सहमाना सरस्वती अस्याअहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमित्यतेन मंत्रेण ॥

**अथ पुꣳसवनम्** ॥ १ ॥ **पुरा स्यंदतइति मासे द्वितीये तृतीये वा** ॥ २ ॥ **यदहः पुꣳसा नक्षत्रेण चन्द्रमायुज्येत तदहरुपवास्याप्लाव्याऽहते वाससी परिधाप्य न्यग्रोधावरोहांछुंगांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनꣳहिरण्यगर्भोऽद्भ्यः संभृतइत्येताभ्यां** ॥ ३ ॥ **कुशाकंटकꣳसोमाꣳशुं चैके** ॥ ४ ॥ **कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्यादिति विकृत्यैनमभिमंत्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः** ॥ ५ ॥ ॥ १४ ॥

**अथ पुꣳसवनं** ॥ अथ अवसरप्राप्तं पुंसवनाख्यं गर्भसंस्कारकं कर्म व्याख्यास्यते ॥ **पुरा स्यंदतइति** ॥ पुरा अग्रे स्यंदते चलिष्य-

ति यावत्पुरा निपातयोर्लडिति पुरायोगे भविष्यदर्थे वर्त्तमानप्रयोगइति हेतोः ॥ **मासे द्वितीये तृतीये वा यदहः पुꣳसा नक्षत्रेण चंद्रमायुज्येत** ॥ गर्भधारणकालात् । द्वितीये तृतीये वा मासे यस्मिन्नहनि उपवास्याभोजनं कारयित्वा भार्यां आच्छाद्य स्नापयित्वा अहते नवे सदृशे सकृत्प्रक्षालिते वाससी अंतरीयोत्तरीये द्वे परिधाप्य परिधानं कारयित्वा ॥ **न्यग्रोधावरोहांछुंगांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनं** ॥ न्यग्रोधस्य वटस्य अवरोहान् अवाचीनं अवरोहंति जायंते इत्यवरोहास्तान् शुंगान् तदग्रपल्लवान् मुकुलाकारान् सान्निध्याच्चकारोवरोहसमुच्चयार्थः ततश्चोभयं रात्रौ पूर्ववत् गर्भधारणार्थोक्तवत् पिष्ट्वा पूर्ववदेव आसेचनं भर्त्तुः । दक्षिणनासारंध्रे मंत्रविशेषमाह ॥ **हिरण्यगर्भोद्भ्यः संभृतइत्येताभ्यां ऋग्भ्यां कुशकंटकꣳ सोमाꣳशुं चैके** ॥ एके आचार्याः न्यग्रोधावरोहशुंगेषु पिष्यमाणेषु कुशस्य कंटकं मूलं सोमांशुं सोमलताखंडं च प्रक्षिपंति तत्पक्षे द्रव्यचतुष्टयपेषणं ॥ **कूर्मपित्तं चोपस्थे कृत्वा** ॥ उत्संगे कृत्वा सयदि कामयेत् ॥ **सयदि कामयेद्वीर्यवान्त्स्यादिति विकृत्यैनमभिमंत्रयते सुपर्णोसीति प्राग्विष्णुक्रमेभ्यः** ॥ अत्र काम्यमाह सभर्त्ता यदि कामयेत अयं गर्भः वीर्यवान् शक्तिमान् स्यादितीच्छेत् तदा अस्या भार्यायाउपस्थे कूर्मपित्तं जलपूर्णशरावं निधाय विकृत्या विकृतिच्छंदस्कया सुपर्णोसीत्यनया ऋचा स्वःपतेत्यंतया एनं गर्भमभिमंत्रयते हस्तेन गर्भाशयं स्पृष्ट्वा मंत्रं जपतीत्यर्थः विष्णुक्रमेभ्यः विष्णुक्रममंत्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमिति सूत्रार्थः ॥ अथ प्रयोगः ॥ तत्र गर्भाधानप्रभृति द्वितीये तृतीये वा मासे यस्मिन् दिने पुन्नक्षत्रयुक्तश्चंद्रः तत्र तस्मिन्नहनि गर्भिणीमुपवासं कारयित्वा मातृपूजाभ्युदयिकं विधाय तां स्नापयित्वाऽहते वाससी परिधाप्य रात्रौ न्यग्रोधावरोहांछुंगांश्च उदकेन पिष्ट्वा पक्षे कुशकंटकं सोमांशुं च तन्नासिका-

यादक्षिणपुटे आसिंचति भर्ता हिरण्यगर्भोद्भः संभृतइति ऋग्भ्यां सयदीच्छेत् वीर्यवान् स्यादयं गर्भः तदा तस्याः स्त्रियाः उदशरावं उपस्थे कृत्वा सुपर्णोसीत्यनया विष्णोः क्रमोसीत्येतस्मात् प्राक्पठितया विकृत्या ऋचांतर्गर्भमभिमंत्रयते पिता ॥

अथ सीमंतोन्नयनं ॥ १ ॥ पुꣳसवनवत् ॥ २ ॥ प्रथमगर्भे मासे षष्ठेऽष्टमे वा तिलमुद्गमिश्रꣳस्थालीपाकꣳश्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठउपविष्टायायुग्मेन सटालुग्रप्सेनौदुंबरेण त्रिभिश्चदर्भपिंजूलैस्त्र्येण्या शलल्या वीरतरशंकुना पूर्णचात्रेण च सीमंतमूर्ध्वं विनयाति भूर्भुवः स्वरिति ॥४॥ प्रतिमहाव्याहृतिवा ॥ ५ ॥ त्रिवृतमाबध्नाति । अयमूर्जावतोवृक्षऊर्ज्जीवफलिनी भवेति ॥ ६ ॥ अथाह वीणागाथिनौ राजानꣳसंगायेतां योवाप्यन्योवीरतरइति ॥ ७ ॥ नियुक्तामप्येके गाथामुपोदाहरंति । सोमएव नोराजेमामानुषीः प्रजाः । अविमुक्तचक्रआसीरंस्तीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्यानामगृह्णाति ॥ ८ ॥ ततो ब्राह्मणभोजनं ॥ ९ ॥ ॥ १५ ॥

अथ सीमंतोन्नयनं पुꣳसवनवत् ॥ अथ पुंसवनानंतरं क्रमप्राप्तं सीमंतोन्नयनं गर्भसंस्कारकं कर्म व्याख्यास्यते तच्च षष्ठेऽष्टमे

वा मासे पुर्ठ·सवनवत् पुंनक्षत्रे भवति प्रथमगर्भे मासे षष्ठेऽष्टमे वा आद्यगर्भे गर्भाधानप्रभृति षष्ठेऽष्टमे वा मासे नियमेन कुर्यात् गर्भांतरेष्वनियमइति कर्कोपाध्यायः अन्ये तु प्रथमगर्भएवेति तथा चाश्वलायनगृह्यपरिशिष्टं प्रथमे गर्भे सीमंतोन्नयनसंस्कारोगर्भमात्रसंस्कारइति। "सकृत्संस्कृतसंस्काराः सीमंतेन द्विजस्त्रियः। यं यं गर्भं प्रसूयंते ससर्वः संस्कृतोभवेत्" इति हारीतोदेवलश्च "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता" उपवासाष्ठवनाहतवासोयुगपरिधापनानि व्रतिना गृह्यंते ॥ **तिलमुद्गमिश्रर्ठ·स्थालीपाकर्ठ·श्रपयित्वा प्रजापतेर्हुत्वा** ॥ तत्र विशेषमाह तिलैर्मुद्गैर्मिश्रस्तिलमुद्गमिश्रस्तं स्थालीपाकं ओदनं चरुं श्रपयित्वा आज्यभागांते प्रजापतये स्वाहेत्येकामाहुतिं हुत्वा स्विष्टकृदादिप्राशनांतं विदध्यात् ॥ **पश्चादग्नेर्भद्रपीठउपविष्टायां** ॥ अग्नेः पश्चिमतःभर्त्तुर्दक्षिणतः मृद्वासने आसीनायां गर्भिण्यां सत्यां युग्मेन सटालुग्रप्सेनौदुंबरेण त्रिभिश्च दर्भपिंजूलैस्त्र्येण्या शलल्या वीरतरशंकुना पूर्णचात्रेण च सीमंतमूर्ध्वं विनयति ॥ **भूर्भुवः स्वरिति प्रति महाव्याहृति वा** ॥ ततोभर्त्ता औदुंबरेण उदुंबरवृक्षोद्भवेन युग्मेन द्व्यादियुग्मेन द्व्यादियुग्मफलवता सटालुग्रप्सेन अपक्वफलएकस्तबकनिबद्धेन त्रिभिश्च दर्भपिंजूलैस्त्रिभिर्दर्भपवित्रैश्च त्र्येण्या त्रिषु स्थानेषु श्वेता त्र्येणी तया त्र्येण्या शलल्या शल्यकाख्यपक्षकंटकेन वीरतरशंकुना शरेषीकया आश्वत्थेन वा शंकुना पूर्णचात्रेण च सूत्रेण पूर्णं पूर्णचात्रं सूत्रकर्त्तनसाधनं तर्कुरिति यावत् तेन लोहकीलकेन च चकारः सर्वसमुच्चयार्थः अतश्चौदुंबरयुग्मादिभिः सर्वैः पुंजीकृतैः सीमंतं स्त्रियाऊर्ध्वं विनयति पृथक्करोति ललाटांतरमारभ्य केशान् द्विधा करोति भूर्भुवः स्वर्विनयामि इत्येतावता मंत्रेण सकृदेव पक्षांतरमाह प्रतिमहाव्याहृति वा अथवा प्रतिमहाव्याहृति महाव्याहृतिं महाव्याहृतिं प्रति विनयति ततश्च भूर्विनयामि भुव-

विनयामि स्वर्विनयामि इत्येवं त्रिर्विनयनं भवति अत्र व्याहृतिमंत्रपदानां आख्यातपदं विना वाक्यस्यासंपूर्णत्वात् आख्यातपदाध्याहारः कर्त्तव्यः तत्र विधियुक्तस्य मंत्रभावः स्यादिति न्यायात् विनयतीति विधिपदं विपरिणम्य विनयामीत्यध्याह्रियते ॥ **त्रिवृतमाबध्नाति ॥** त्रिवृतं वेणीं प्रति आबध्नाति पुंजीकृतमौदुंबरादिपंचकं वेण्यां विनियुनक्तीत्यर्थः अयमूर्जावतोवृक्षउर्जीवफलिनी भवेति मंत्रेण ॥ **अथाह वीणागाथिनौ राजानᳪं संगायेतां योवाप्यन्योवीरतरइति ॥** अथौदुंबरादिपंचकस्य वेणीबंधनानंतरं आह ब्रवीति। किं। हे वीणागाथिनौ राजानं भूपतिं संगायेतां राजवर्णनसंबद्धं ध्रुवादिरूपकं सम्यग्गायेतां युवां अथ वा योन्योपि राजव्यतिरिक्तोवीरतरः प्रकृष्टोवीरः शूरस्तं संगायेतामित्यनुषंगः इत्याह ब्रवीति ॥ **नियुक्तामप्येके गाथामुपोदाहरंति ॥** एके आचार्याः नियुक्तां गाने विहितां गाथां मंत्रमुपोदाहरंति पठंति अपि समुच्चयार्थः तत्परोक्षे राजवीरतरयोरन्यतरगानं गाथागानं च समुच्चितं भवति पक्षांतरे राजवीरतरयोरन्यतरगानं गाथागानं वा तां गाथामाह ॥ **सोमएव नोराजेसादितीरे तुभ्यामित्यंता ॥** पद्धतिकारपक्षे राजवीरतरगाथानां एकतमस्यैव गानं तत्पक्षे नियुक्तामपीत्यपिशब्दोविवक्षितार्थः स्यात् असाविति यां नदीमुपावसिता भवति तस्यानामगृह्णाति ततोगर्भिणी यां नदीं उपसमीपे आवसिता स्थिता भवति तस्यानद्याअसाविति गंगा यमुना इत्येवं प्रथमांतं नाम गृह्णाति ततोब्राह्मणभोजनमित्युक्तार्थमिति सूत्रव्याख्या ॥ अथ पद्धतिः ॥ तत्र प्रथमे गर्भे षष्ठेष्टमे वा मासि पुन्नक्षत्रे मातृपूजां वृद्धिश्राद्धं च कृत्वा बहिः शालायां पंचभूसंस्कारान् कृत्वा लौकिकाग्निमुपसमाधाय ब्रह्मोपवेशनाद्याज्यभागांतं विदध्यात् तत्र विशेषः पात्रासादने आज्यभागानंतरं तंडुलतिलमुद्गानां क्रमेण पृथगासादनं उपकल्पनीयानि मृदुपीठं युग्मान्यौदुंबरफलानि

एकस्तबकनिबद्धानि त्रयोदर्भपिंजूलाः त्र्येणी शलली वीरतरशंकुः शरेषीका आश्वत्थोवा शंकुः पूर्णं चात्रं वीणागाथिनौ चेति आज्यमधिश्रित्य चरुस्थाल्यां मुद्गान् प्रक्षिप्याधिश्रित्य इषच्छृतेषु मुद्गेषु तिलतंडुलप्रक्षेपं कृत्वा पर्यग्निकरणं कुर्यात् ततआज्यभागांते स्थालीपाकेन प्रजापतये स्वाहेति हुत्वा इदं प्रजापतये इति त्यागं विधाय स्थालीपाकेनोत्तरार्द्धात्स्विष्टकृदाहुतिं महाव्याहृत्यादिप्राजापत्यांतानवाहुतीर्हुत्वा संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दत्वा पश्चादग्नेर्भद्रपीठं स्थापयित्वा गर्भिण्यां योषिति स्नातायां परिहिताहतवासोयुग्मायां भद्रपीठउपविष्टायां युग्मेन सटालुग्रप्सेनौदुंबरेण त्रिभिश्च दर्भपिंजूलैस्त्र्येण्या शलल्या वीरतरशंकुना पूर्णचात्रेण चेत्येतैः सर्वैः पुंजीकृतैः स्त्रियाः सीमंतं भूर्भुवःस्वर्विनयामीति ऊर्ध्वं विनयति मंत्रेण सकृत् यद्वा भूर्विनयामि भुवर्विनयामि स्वर्विनयामि इति त्रिर्विनयति ततोविनयनसाधनमौदुंबरादिपंचकं स्त्रियावेण्यां बध्नाति अयमूर्जावतोवृक्षउर्जीवफलिनी भवेतिमंत्रेण अथ वीणागाथिनौ राजानं संगायेतामिति प्रैषं ददाति । अथवा अमुकं वीरतरं संगायेतामिति ततस्तौ यद्वानाय प्रेषितौ तं गायंतः अथ वा विणागाथिनौ सोमं राजानं संगायेतामिति प्रेषितौ सोमएव नो राजेमामानुषीः प्रजाः अविमुक्तचक्रआसीरंस्तीरे तुभ्यं इत्यंतां गाथां वीणागाथिनौ गायतः ॥ इति विकल्पपक्षः समुच्चयपक्षे राजानं अन्यं वीरतरं वा सोमं राजानं च संगायेतामिति प्रेषितौ उभयं गायतः असौ स्थाने समीपावस्थितायाः गंगाप्रमुखायानद्याः संबुद्ध्यंतं गंगेत्यादि नाम गृह्णाति गर्भिण्येव ततोब्राह्मणभोजनं ददाति अत्र प्रथमगर्भइति वचनात् स्त्रीसंस्कारकर्मत्वाच्च यतः "सकृत्संस्कृतसंस्काराः सीमंतेन द्विजास्त्रियः । यं यं गर्भं प्रसूयंते ससर्वः संस्कृतोभवेत्" न प्रतिगर्भं सीमंतोन्नयनं पुंसवनं तु दृष्टार्थत्वाद्भाष्यकारमते प्रतिगर्भं भवति ॥

सोष्यंतीमद्भिरभ्युक्षति। एजतु दशमास्यइति प्राग्यस्यैतइति ॥ १ ॥ अथावरावपतनम्। अवैतु पृश्निः शेवलꣳशुने जरायवत्तवे। नैवमाꣳसेन पीवरीं न कस्मिंश्चनायतनमवराजरायु पद्यतामिति ॥ २ ॥ जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति ॥ ३ ॥ अनामिकया सुवर्णांतर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ ४ ॥ अथास्यायुष्यं करोति ॥ ५ ॥ नाभ्यां दक्षिणे वा कर्णे जपति अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि। सोमआयुष्मान्त्सौषधीभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि। ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मंतं करोमि देवाआयुष्मंतस्तेऽमृतेनायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि। ऋषयआयुष्मंतस्ते व्रतैरायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि पितरआयुष्मंतस्ते स्वधाभिरायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि समुद्रआयुष्मान्त्सस्रवंतीभिरायुष्मांस्तेन त्वायुषायुष्मंतं करो-

मीति ॥ ६ ॥ त्रिस्त्रिस्त्र्यायुषमिति च ॥ ७ ॥ सयदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृश-शेत् ॥ ८ ॥ दिवस्परीत्यतस्यानुवाकस्योत्तमामृचं प-रिशिनष्टि ॥ ९ ॥ प्रतिदिशं पंचब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति ॥ १० ॥ पूर्वोब्रूयात्प्राणे-ति ॥ ११ ॥ व्यानेति दक्षिणः ॥ १२ ॥ अपानेत्य-परः ॥ १३ ॥ उदानेत्युत्तरः ॥ १४ ॥ समानेति पंचमउपरिष्टादवेक्षमाणोब्रूयात् ॥ १५ ॥ स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु ॥ १६ ॥ सयास्मिन्देशे जातोभवति तमभिमंत्रयते वेद ते भूमिहृदयं दिवि चंद्रमासि श्रितं । वेदाहं तन्मां तद्विद्यात्पश्येम श-रदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः श-तमिति ॥ १७ ॥ अथैनमभिमृशत्यश्मा भव पर-शुर्भव हिरण्यमस्तुतं भव । आत्मा वै पुत्रनामासि सजीव शरदः शतमिति ॥ १८ ॥ अथास्य मातर-मभिमंत्रयतइडासि मैत्रावरुणी वीरे वीरमजीज-नथाः । सा त्वं वीरवती भव यास्मान्वीरवतोऽकर-दिति ॥ १९ ॥ अथास्यै दक्षिणꣳस्तनं प्रक्षाल्य प्रयच्छतीमꣳस्तनमिति ॥ २० ॥ यस्ते स्तनइति उत्तरमेताभ्यां ॥ २१ ॥ उदपात्रꣳशिरस्तोनिद-

धात्यापोदेवेषु जाग्रथ यथा देवेषु जाग्रथ । एवम-स्यार्ठ·सूतिकायार्ठ·सपुत्रिकायां जाग्रथेति ॥ २२ ॥ द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपाति शंडामर्क्कउप-वीरः शौंडिकेयउलूखलः । मलिम्मुचोद्रोणासश्च्यव नोनश्यतादितः स्वाहा । आलिखन्ननिमिषः किं वदंतउपश्रुतिर्हर्यक्षः कुंभी शत्रुः पात्रपाणिर्नृमणि-र्हंत्रीमुखः सर्षपारुणश्च्यवनोनश्यतादितः स्वाहेति ॥ २३ ॥ यदि कुमारउपद्रवेज्जालेन प्रच्छाद्योत्तरी-येण वा पितांकआधाय जपति कूर्कुरः सुकूर्कुरः कू-र्कुरोबालबंधनः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापव्हर तत्सत्यं ॥ यत्ते देवावर मदद्दुः सत्वं कुमारमेव वावृणीथाः। चेच्चेच्छुनकसृज नमस्ते अस्तुसीसरोलपेतापव्हर तत्सत्यं यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चे च्छुनकसृजनमस्ते अस्तुसीसरोलपेताऽपव्हरेति ॥ २४ ॥ अभिमृशाति न नामयाति न रुदाति न हृष्यति न ग्लायाति यत्र वयं वदामोयत्र चाभि-मृशामसीति ॥ २५ ॥ ॥ १६ ॥

**सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्यइति प्राग्यस्यैतइति** ॥ सोष्यंतीं प्रसवशूलवतीं स्त्रियं भर्त्ता अद्भिर्जलेन अभ्युक्षति प्रसिंचति एजतु दशमास्यइत्येतया प्राग्यस्यैतइति प्राक्पठितया ऋचा त्र्यवसानया विराट्जगत्या ॥ **अथावरावपतनम्** ॥ अथाभ्युक्षणानंतरं अवरावपतनं अवरं उल्वं जरायुवेष्टितं गर्भवेष्टनं अवाचीनमधः पतत्यनेन जप्तेनेत्यवरावपतनोमंत्रः तं स्त्रीसमीपे उपविश्य भर्त्ता जपति यथा अवैतु पृश्निशेवलमित्यादि अवरा जरायु पद्यतामित्यंतं ॥ **जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति** ॥ ततः जातस्य उत्पन्नस्य कुमारस्य अच्छिन्नायां नाड्यां अखंडिते नाले सति मेधाजननायुष्ये मेधाजननं च आयुष्यं च मेधाजननायुष्ये ते करोति पिता मेधाजननं तावदाह ॥ **अनामिकया सुवर्णांतर्हितया मधुघृते प्राशयति घृतं वाभूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामिभूर्भुवः स्वः सर्वं त्वयि दधामीति**॥ अनामिकयांगुल्या सुवर्णेनाच्छादितया मधु च घृतं च मधुघृते द्वंद्वसमाससामर्थ्यादेकीकृते घृतं वा केवलं कुमारं सकृत् प्राशयति कुमारस्य जिह्वायां निर्मार्ष्टि भूस्त्वयीत्यादि सर्वं त्वयि दधामीत्यंतेन मंत्रवाक्यसमुदायेन 'नत्वर्थैकत्वादेकं वाक्यमिति' जैमिनिसूत्रात् 'सुप्तिङंतचयोवाक्यं क्रिया वा कारकान्विता' इत्यमरसिंहोक्तेश्चैकार्थमेकं वाक्यं एकस्य वाक्यस्य च तेषां वाक्यं निराकांक्षं मिथः संबद्धमिति कात्यायनवचनेनैकमंत्रत्वमिति प्रतिपादनात् कथं मंत्रवाक्यसमुदायस्यैकमंत्रत्वं अत्रोच्यते सत्यं यदि इतिकारादिकं मंत्रावसानज्ञापकं किंचिन्न स्यात् तदैतच्छंक्यं अत्र पुनरितिकारोमंत्रावसानज्ञापकोजागर्त्ति तेन नायं दोषः यथा सर्वैः भूर्भुव इत्येतावत्त्रैव गार्हपत्यमादधाति तैः सर्वैः पंचभिराहवनीयमादधाति भूर्भुवःस्वरिति च श्रुतौ वाक्यसमुदायस्य इतिकारेण मंत्रावसानं ज्ञायते कातीयसूत्रेपि दारुभिर्ज्वलन्तमादधाति

भूर्भुवइति आहवनीयमादधाति भूर्भुवःस्वरिति अत्र यद्यपि एकैकस्या-व्याहृतेर्मंत्रत्वं युक्तं समस्तानां व्याहृतीनां च तथापि इतिकारेण द्वयोरपि व्याहृत्योर्मंत्रत्वं व्यवस्थाप्यते एवमन्यत्रापि बहूनां मंत्र-वाक्यानां इतिकारादिविनियोजकेन मंत्रैक्यं तत्र तत्रायमेव न्यायो-नुसर्त्तव्यः ॥ **अथास्यायुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जपति ॥** अथ मेधाजननानंतरं अस्य कुमारस्यायुष्यं आयुष्ये हितं जीवनवर्द्धनं । कर्म करोति । तद्यथा नाभिदेशे दक्षिणे वा श्रवणे नाभ्यां दक्षिणकर्णे वा इतिनियमाधिकरणे सप्तमी गंगायां घोषइतिवत् तेन नाभिसमीपे दक्षिणकर्णसमीपे वा जपत्यग्निरायुष्मानित्यादिकान्मंत्रान् त्रिर्जपति त्रीन्वारान् उपांशु पठति अग्निसोमब्रह्मदेवऋषिपितृयज्ञस-मुद्रइत्यंतान् ॥ **त्र्यायुषमिति च** ॥ ततः त्र्यायुषं जमदग्नेरित्यादि तन्नोअस्तु त्र्यायुषमित्यंतं च मंत्रं तथैवत्रिर्जपति । इदं चायुष्यकरणं कालातिक्रमेपि क्रियते मेधाजननं मुख्यकालातिक्रमान्निवर्त्तते तस्मात्कु मारं जातं घृतं चैवाग्रे प्रतिलेहयंति स्तनं वानुधापयंतीति जातमात्रस्य कुमारस्य श्रुत्या मेधाजननोपदेशात् ॥ **सयदि कामयेत सर्वमायुरि-यादिति वात्सप्रेणैनमभिमृशेत्** ॥ सः पिता यदि इप्सेत् अयं कुमारः सर्वं संपूर्णं आयुर्जीवितं इयात् प्राप्नुयात् इत्येवं तदा वात्सप्रे-ण वत्सारप्रिणा भालंदनेन दृष्टेनानुवाकेन एनं कुमारं अभिसमंततः सर्वं शरीरमालभेत् तत्र विशेषमाह ॥ **दिवस्परीत्येतस्यानुवाक-स्योत्तमामृचं परिशिनष्टि** ॥ दिवस्परीत्यादिकोद्वादशर्चोनुवाकोवा-त्सप्रः एतस्य उत्तमां अंत्यां द्वादशीं अस्ताव्यग्निरित्येतामृचं परिशि-नष्टि व्युदस्यति तां परित्यज्य एकादशभिर्ऋग्भिरभिमृशेदित्यर्थः ॥ **प्रतिदिशं पंच ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति पूर्वो-ब्रूयात्प्राणेति व्यानेति दक्षिणोऽपानेत्यपरउदानेत्युत्तरतः स-मानेतिपंचमउपरिष्टादवेक्षमाणोब्रूयात् स्वयं वा कुर्यादनुपरिक्रा-**

**ममविद्यमानेषु इत्यंतं सूत्रं** ॥ कुमारस्य प्रतिदिशं दिशं दिशं प्रति चतसृषु दिक्षु प्राच्यादिषु मध्ये च यथाक्रमं पंच ब्राह्मणान् अवस्थाप्य संनिवेश्य कुमाराभिमुखान् तान् प्रतिब्रूयात् । किं । इममनुप्राणितेति इमं कुमारं अनुप्राणित अनुलक्षीकृत्य प्राणेत्यादि ब्रूत इति प्रैषः ततः प्रेषिताब्राह्मणाः पूर्वादिक्रमेण प्राणइति कुमारं लक्षीकृत्य पूर्वोब्रूयात् व्यानेतिदक्षिणोब्राह्मणः अपानेतिपश्चिमः उदानेत्युत्तरः समानेति पंचमः उपरिष्टादूर्ध्वमवेक्षमाणः अविद्यमानेषु स्वयं वा स्वयमेव अनुप्राणनं कुर्यात् कथं अनुपरिक्रामं परिक्रम्य परिक्रम्य पूर्वादिकां दिशं प्राणेत्यादि अनुपरिक्रामेण णमुलंतं अस्मिन् पक्षे प्रैषाभावः सयस्मिन् देशे जातोभवति तमभिमंत्रयते सः कुमारः यस्मिन् देशे भूभागे उत्पन्नः पतति तं देशं अभिमंत्रयते हस्तेन स्पृशति वेद ते भूमिः इत्यादि शरदः शतमित्यंतेन मंत्रेण अथैनमभिमृशत्यश्माभवेति अथ जन्मदेशाभिमंत्रणानंतरं एनं कुमारं पिताभिमृशति समंततः सर्वशरीरे स्पृशति अश्मा भवेत्यादिना सजीव शरदः शतमित्यंतेन मंत्रेण वात्सप्राभिमर्शनादि एतदभिमर्शनांतं कालव्यतिक्रमेपि क्रियते संस्कारकर्मत्वात् अथास्य मातरमभिमंत्रयते इडासीति अथ कुमाराभिमर्शनानंतरं अस्य कुमारस्य जननीमभिमंत्रयते अभिलक्षीकृत्य इडासीत्यादिना वीरवतोकरदित्यंतेन अथास्यै दक्षिणꣳ स्तनं प्रक्षाल्य प्रयच्छतीमꣳ स्तनमिति यस्ते स्तनइत्युत्तरमेताभ्यां अथाभिमंत्रणं कृत्वा अस्यै अस्याः मातुर्दक्षिणं स्तनं प्रक्षाल्य धावयित्वा कुमाराय ददाति इमꣳ स्तनमित्येतयर्चा ततउत्तरं वामं स्तनं प्रक्षाल्य प्रयच्छति यस्ते स्तनइमꣳ स्तनमित्येताभ्यामृग्भ्यां उदपात्रꣳ शिरस्तोनिदधात्यापोदेवेषु जाग्रथेति उदपात्रं जलपूर्णपात्रं शिरस्तः शिरः प्रदेशे कुमारस्य निदधाति स्थापयति आपोदेवेष्वित्यादिना जाग्रथेत्यंतेन मंत्रेण द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान् सर्षपानग्ना-

वावपति शंडामर्काइत्यादि ततः पंचभूसंस्कारपूर्वकं द्वारदेशे सूतिकागृहस्य सूतिकाग्निं स्थापयित्वा उत्थानात् उत्थानं यावत् संधिवेलयोः सायं प्रातः फलीकरणमिश्रान् फलीकरणैः मिश्रान् युक्तान् सर्षपान् तस्मिन्नग्नौ आवपति जुहोति द्वे आहुती शंडामर्काइति ॥ आलिखन्ननिमिषइति द्वाभ्यां मंत्राभ्यां आवपनोपदेशात् होमेतिकर्त्तव्यता निवृत्तिः नैमित्तिकमाह यदि कुमारउपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पितांकआधाय जपति कूर्कुरइत्यादि यदि चेत्कुमारोबालग्रहः तं बालं उपद्रवेत् अभिभवेत् तदा तं बालं जालेन मत्स्यग्रहणसाधनेन तदलाभे उत्तरीयेण वा वाससा प्रच्छाद्य छादयित्वा अंके उत्संगे निधाय धृत्वा कूर्कुरइत्यादिकं अपव्हरेत्यंतं मंत्रं जपति अभिमृशति न नामयति जपांते कुमारस्य सर्वांगमभिमृशति न नामयतीत्यादि यत्र चाभिमृशामसीत्यंतेन मंत्रेणेति सूत्रार्थः ॥ ॥ अथ प्रयोगः ॥ सोष्यंती स्त्रियं एजतु दशमास्य इत्यनयर्चा अस्त्रज्जरायुणा सहेत्यंतया आद्भिरभ्युक्षति पतिः ततः स्त्रीसमीपे अवैतु पृश्निशेवलंशुने जरायवत्तवे नैव मांसेन पीवरीं न कस्मिंश्चनायतमवरा जरायु पद्यतामित्यंतं अवरावपतनं मंत्रं जपति तत्र यदि कुमारउत्पद्यते तदा मातृपूजाभ्युदयिके विधाय अच्छिन्ने नाले मेधाजननायुष्ये करोति तत्र मेधाजननं यथा अनामिकयांगुल्या सुवर्णेनांतर्हितया मधुघृते मेलयित्वा केवलं घृतं कुमारं भूस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीत्यनेन मंत्रेण सकृत्प्राशयति अथायुष्यं करोति तद्यथा कुमारस्य नाभिसमीपे दक्षिणकर्णसमीपे वा अग्निरायुष्मानित्यादिकान् समुद्रआयुष्मानित्यंतानष्टौ मंत्रान् त्रिर्जपति अग्निरायुस्मात्सवनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि सोमआयुष्मात्सओषधिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मंतं करोमि- देवाआयुष्मंतस्तेमृतेनायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि ऋषय आयुष्मंत

स्ते व्रतैरायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि ।पितरआयुष्मंतस्ते स्वधाभि-
रायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मां
स्तेन त्वायुषायुष्मंतं करोमि समुद्रआयुष्मान्त्सस्रवंतीभिरायुष्मांस्तेन
त्वायुषायुष्मंतं करोमि इति ततस्त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं
यद्देवेषु त्र्यायुषं तन्नोअस्तु त्र्यायुषमिति मंत्रं त्रिर्जपति सपिता यदि
कामयेत अयं कुमारः सर्वमायुरियादिति तदा तं कुमारं दिवस्परी-
त्यारभ्य उशिजोविवव्रुरित्यंतेन वात्सप्रसंज्ञकेनानुवाकेनाभिमृशेत् अथ
कुमारस्य पूर्वादि चतसृषु दिक्षु चतुरो ब्राह्मणान् एकं मध्ये च अव-
स्थाप्य इममनुप्राणितेति तान् ब्रूयात् ततः पूर्वदिक्स्थितोब्राह्मणः
कुमारं लक्षीकृत्य प्राणइति दक्षिणोव्यानइति पश्चिमः अपानइति
उत्तरउदानइति पंचमः समानइति उपरिष्टादवेक्षमाणः ब्रूयात् अ-
विद्यमानेषु तु ब्राह्मणेषु स्वयमेव तस्यां तस्यां दिशि कुमाराभिमुखं
स्थित्वा प्राणेत्यादि पूर्वोक्तं ब्रूयात् अस्मिन् पक्षे न प्रैषः ततोय-
स्मिन् देशे कुमारोजातोभवति तं देशं वेद ते भूमिहृदयं दिवि चंद्रमसि
श्रितं । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतं
शृणुयाम शरदः शतं इत्यंतेन मंत्रेणाभिमंत्रयते अथैनं कुमारं अश्मा
भव परशुर्भव हिरण्यमस्तृतं भव। आत्मा वै पुत्रनामासि सजीव शरदः
शतमित्यंतेन मंत्रेणाभिमृशति अथास्य कुमारस्य मातरमभिमंत्रयते
इडासि मैत्रावरुणी वीरे वीरमजीजनथाः सात्वं वीरवती भव यास्मा-
न्वीरवतोकरदित्यनेन मंत्रेण अथ अस्य कुमारस्य मातुर्दक्षिणं स्तनं
प्रक्षाल्य प्रयच्छति इमꣳस्तनमित्यनयर्चा ततउत्तरं वामं प्रक्षाल्य
प्रयच्छति यस्ते स्तनइमꣳस्तनमित्येताभ्यामृग्भ्यां ततः कुमारस्य शि-
रःप्रदेशे उदपात्रं जलपूर्णं पात्रं निदधाति स्थापयति आपोदेवेषु
जाग्रथ यथा देवेषु जाग्रथ एवमस्याꣳसूतिकायाꣳसपुत्रिकायां जा-
ग्रथेत्यनेन तदुदपात्रं प्रागुत्थानात्स्थापितमेव तिष्ठति ततः सूतिकागृहस्य-

द्वारदेशे पंचभूसंस्कारान् कृत्वा सूतिकाग्निं स्थापयित्वा सायंप्रातःसंध्याद्वये फलीकरणमिश्रान् तंदुलकणयुतान् सर्षपान् तस्मिन्नग्नौ हस्तेन जुहोति यावत्सूतिकोत्थानं। कथं शंडामर्काउपवीरः शौंडिकेयउलूखलः मलिम्लुचोद्रोणासश्च्यवनोनश्यतादितः स्वाहा॥ इत्यनेन मंत्रेणैकामाहुतिं आलिखन्ननिमिषः किंवदंतउपश्रुतिः हर्यक्षः कुंभी शत्रुः पात्रपाणिर्नृमणिर्हंत्रीमुखः सर्षपारुणश्चच्यवनोनश्यतादितः स्वाहा इत्यनेन द्वितीयां इदमग्नयइत्युभयत्र त्यागः यदि कुमारग्रहोबालमुपद्रवेत्तदा तं बालं जालेन उत्तरीयेण वा वस्त्रेण प्रच्छाद्य अंके गृहीत्वा पिता जपति कूर्कुरः सुकूर्कुरः कूर्कुरोबालबंधनः चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेताव्हर तत्सत्यं। यत्ते देवावरमददुः सत्वं कुमारमेव वा वृणीथाः चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापव्हर तत्सत्यं यत्ते सरमा माता सीसरःपिता श्यामशबलौ भ्रातरौ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापव्हरेत्यंतं मंत्रं न नामयाति न रुदति न हृष्याति न ग्लायति यत्र वयं वदामोयत्र चाभिमृशामसीत्यनेन मंत्रेण पिता कुमारमभिमृशति॥ १६॥

**दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति॥ १॥ द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यंतरंतस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितं॥ २॥ अयुजाक्षरमाकारांतठंस्त्रियै तद्धितं॥ ३॥ शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य॥ ४॥ चतुर्थे मासि निष्क्रमणिका॥ ५॥ सूर्यमुदीक्षयति तच्चक्षुरिति॥ ६॥॥ १७॥**

दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति॥ प्रसवदिनमारभ्य दशम्यां तिथौ सूतिकां सूतिकागृहादुत्थाप्य

नामकरणांगतया ब्राह्मणान् त्रीन् भोजयित्वा पिता अपत्यस्य नामधेयं करोति अत्र दशम्यामिति सूतकांतोपलक्षणं ततश्च यस्य यावंति दिनानि सूतकं तदंतादिने सूतकोत्थापनमित्यर्थः अपरादिने च नामकरणं तथा च गोभिलसूत्रं **"दशरात्रे व्युष्टे नामकरणमिति"** याज्ञवल्क्यवचनं अहन्येकादशे नामेति नामकरोतीत्युक्तं तत्कीदृशमित्यपेक्षायामाह ॥ **द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यंतरंतस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्नतद्धितमयुजाक्षरमाकारांतꣳस्त्रियै तद्धितं ॥** द्वे अक्षरे यस्य तद् द्व्यक्षरं चत्वार्यक्षराणि यस्य तच्चतुरक्षरं अनयोर्विकल्पः किं च घोषवदादि घोषवदक्षरं आदौ यस्य नाम्नः तत् घोषवदादि घोषवंति चाक्षराणि गघङजझञडढणदधनबभमहइत्येतानि अंतरंतस्थं अंतर्मध्ये अंतस्थायस्य तदंतरंतस्थं अंतस्थायरलवाः दीर्घाभिनिष्ठानं दीर्घमन्हस्वं अभिनिष्ठानमवसानं यस्य तत् दीर्घाभिनिष्ठानं कृतं कृत्प्रत्ययांतं कुमारस्य नामधेयं कुर्यात् पक्षांतरे कृतं पितामहादिनाम तत्कुर्यात् न तद्धितं तद्धितप्रत्ययांतं न कुर्यात् स्त्रियानाम्नि विशेषमाह अयुजाक्षरं अयुजानि विषमाणि त्र्यादीन्यक्षराणि यस्मिन्नाम्नि तदयुजाक्षरं आकारांतं आकारःअंते यस्य तदाकारांतं तद्धितं तद्धितप्रत्ययांतं स्त्रियै स्त्रियानाम कुर्यादित्यनुषंगः अपि च ॥ **शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य ॥** ब्राह्मणस्य विप्रस्य पूर्वोक्तलक्षणनामांते शर्मेति क्षत्रियस्य पूर्वोक्तलक्षणनामांते वर्मेति वैश्यस्य पूर्वोक्तनामांते गुप्तेति पदं कुर्यात् अथवा ब्राह्मणस्य नाम शर्म मंगलप्रतिपादकं कुर्यात् क्षत्रियस्य वर्म शौर्यरक्षावत्ताप्रतिपादकं वैश्यस्य गुप्तेति धनवत्ताप्रतिपादकं शूद्रस्य प्रेष्यत्वप्रतिपादकं इति बोद्धव्यं ॥ इति सूत्रार्थः ॥ अथ प्रयोगः ॥ सूतकांतद्वितीयादिने नामकरणनिमित्तकं मातृपूजापूर्वकं आभ्युदयिकं श्राद्धं विधाय अन्यब्राह्मणत्रयं भोजयित्वा पिता कुमारस्य द्व्यक्षरमित्यादिनोक्तलक्षणं

नाम करोति यथा शिष्टाचारं देवराजशर्माइत्यादि ॥ **चतुर्थे मासि निष्क्रमणिका कुमारस्य** । गृहाद्बहिर्निष्क्रमणं करोति पिता ॥ **सूर्यमुदीक्षयति तच्चक्षुरिति** ॥ अथ तच्चक्षुर्देवहितमित्यादिना भूयश्च शरदः शतादित्यंतेन मंत्रेण श्रीसूर्यं भगवंतं रश्मिमालिनं उदीक्षयति कुमारं प्रदर्शयति पिता इति सूत्रार्थः ॥ अथ प्रयोगः ॥ जन्मदिने जन्मनक्षत्रे वा प्राणानायम्य देशकालौ स्मृत्वा अस्य कुमारस्य गृहान्निष्क्रमणं करिष्ये इति संकल्प्य तदंगत्वेन चतुर्थे मासि शुभे दिने मातृपूजाभ्युदयिके विधाय मात्रा अंके कृतं कुमारं गृहाद्बहिरानीय तच्चक्षुर्देवाहितं मंत्रेण शिशोः सूर्यस्य उदीक्षणं पिता कारयति ॥

**प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत् ॥ १ ॥ पुत्रं दृष्ट्वा जपति । अंगादंगात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि सजीव शरदः शतमिति ॥ २ ॥ अथास्य मूर्द्धानमवजिघ्रति । प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रायुषासौ जीव शरदः शत मिति ॥ ३ ॥ गवां त्वाहिंकारेणेति चेति दक्षिणेस्य कर्णे जपति । अस्मे प्रयंधि मघवन्नृजीषिन्निंद्ररायो- विश्ववारस्य भूरेः अस्मे शतꣳशरदोजीवसेधा अस्मेव्वीरांछश्वतइंद्र शिप्रिन्निति ॥ ४ ॥ इंद्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ॥ पोषꣳरयीणामरिष्टिं तनूनाꣳस्वात्मानं वाचः सुदिनत्वमह्नामिति सव्ये ॥ ५ ॥ स्त्रियै तु मूर्द्धानमेवावजिघ्राति तूष्णीं ॥ ६ ॥ ॥ १८ ॥**

॥ **प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत्** ॥ प्रोष्य प्रवासादेत्य गृहान् गृहस्थितान् भार्यापुत्रादीन् उपतिष्ठते प्रार्थयते कथं पूर्ववत् आहिताग्निप्रवासप्रकरणोक्तवत् तद्यथा गृहामाबिभीतेत्यारभ्य उपहूतोगृहेषु नइत्येतैस्त्रिभिर्मंत्रैः गृहानुपस्थाय क्षेमाय वइत्यादिना शंयोरित्यंतेन मंत्रेण गृहं प्रविशेत् केचित्तु सूत्रकारेण गृहोपस्थानमात्रविधानात् मंत्रवत् प्रवेशं नेच्छंति ॥ **पुत्रं दृष्ट्वा जपत्यंगादंगात्संभवासि हृदयादधिजायसे आत्मा वै पुत्रनामासि सजीव शरदः शतमिति** ॥ पुत्रं आत्मजं दृष्ट्वा विलोक्य अंगादंगादित्यादिकं मंत्रं जपति ॥ **अथास्य मूर्द्धानमवजिघ्रति प्रजापतेष्ट्वेति** ॥ अथ जपानंतरं अस्य पुत्रस्य मूर्द्धानं शिरः अवजिघ्रति अवाचीनं जिघ्रति केन मंत्रेण ॥ **प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् जीव शरदः शतमित्येतेन मंत्रेण सकृत् मूर्द्धानमवघ्राय द्विस्तूष्णीमवजिघ्रति** ॥ पुनः गवां त्वाहिंकारेणेति च त्रिः पुनर्गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् जीव शरदः शतमिति मंत्रेण सकृत् मूर्द्धानमवजिघ्राय द्विस्तूष्णीमवजिघ्रति ॥ **दक्षिणेस्य कर्णे जपति । "अस्मेप्रयंधीति ॥"** अस्य पुत्रस्य दक्षिणे कर्णे श्रवणे अस्मे प्रयन्धि मघवन्नृजीषिन्निंद्ररायोविश्ववारस्य भूरेः अस्मे शतꣳशरदोजीवसेधाअस्मेऽवीरांछश्वतइंद्रशिप्रिन्निति मंत्रं जपति ॥ अथ सव्ये वामकर्णे इंद्रज्येष्ठानि द्रविणानि धेहि चित्रं दक्षस्य सुभगत्वमस्मे पोषꣳरयीणामरिष्टिं तनूनाꣳस्वात्मानं वाचः सुदिनत्वमह्नामित्यंतं मंत्रं जपति स्त्रियै तु ॥ **मूर्द्धानमेवावजिघ्रति** ॥ तूष्णीं स्त्रियाः पुत्रिकायाः मूर्द्धानमेव अवजिघ्रति तूष्णीं विना मंत्रेण एवकारेण दर्शनजपकर्णजपयोर्निवृत्तिः ॥ १८ ॥

**षष्ठे मासेऽन्नप्राशनं ॥ १ ॥ स्थालीपाकꣳश्रपयित्वाज्यभागाविष्ट्वाज्याहुती जुहोति देवीं वाचम-**

जनयंत देवास्तां विश्वरूपाः पशवोवदंति । सा नोमंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति ॥ २ ॥ वाजोनोअद्येति द्वितीयां ॥ ३ ॥ स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गंधानशीय स्वाहा चक्षुषा रुपाण्यशीय स्वाहा श्रोत्रेण यशोशीय स्वाहेतिं ॥ ४ ॥ प्राशनांते सर्वान्रसान्त्सर्वमन्नमेकतउद्धृत्याथैनं प्राशयेत् ॥ ५ ॥ तूष्णीं॑ हंतेति वा हंतकारं मनुष्याइति श्रुतेः ॥ ६ ॥ भारद्वाज्यामा॑सेन वाक्प्रसारकामस्य ॥ ७ ॥ कपिंजलमा॑सेनान्नाद्यकामस्य ॥ ८ ॥ मत्स्यैर्जवनकामस्य ॥ ९ ॥ कृकषायाऽआयुष्कामस्य ॥ १० ॥ आट्याब्रह्मवर्चसकामस्य ॥ ११ ॥ सर्वैः सर्वकामस्य ॥ १२ ॥ अन्नपर्याय वा ततोब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम् ॥ १३ ॥ ॥ १९ ॥

इति श्रीपारस्करविरचिते गृह्यसूत्रे प्रथमः कांडः समाप्तः ॥

---

षष्ठे मासेऽन्नप्राशनं ॥ जन्मतः षष्ठे मासे कुमारस्य अन्नप्राशनं कर्म कुर्यात् स्थालीपाकं॑ श्रपयित्वाज्यभागाविष्ट्वाज्याहुती जुहोति अन्नप्राशनस्येतिकर्त्तव्यताविशेषमाह स्थालीपाकं चरुं यथाविधि श्रपयित्वा आघारावाज्यभागौ हुत्वा द्वे आहुती जुहोति ॥

**देवीं वाचमित्यादि वाजोनोअद्येति च द्वितीयमिरंतं सूत्रं ॥** आज्येन वाचमित्यादिकया ऋचा एकामाहुतिं जुहुयात् इदं वाचे इति त्यागं विधाय चकारात्पुनर्देवीं वाचमित्येतस्यांते वाजोनः यथा देवीं वाचमिति वाजोनोअद्येति द्वाभ्यामृग्भ्यां द्वितीयामाज्याहुतिं हुत्वा इदं वाचे वाजायचेति त्यागं कुर्यात् स्थालीपाकस्य जुहोति स्थालीपाकस्य चरोः प्राणेनान्नमशीयेत्यादिभिश्चतुर्भिर्मंत्रैश्चतस्रश्चाहुती- र्जुहोति ततः स्विष्टकृदादिप्राशनांतं विधाय सर्वान् रसान्सर्वमन्नमे- कतोद्धृत्याथैनं प्राशयेत्तूष्णींठ हंतेति वा हंतकारं मनुष्याइति श्रुतेः सर्वान्मधुरादीन् रसान्सर्वमन्नं भक्ष्यभोज्यलेह्यपेयचोष्यादि एकतो- द्धृत्य एकतोद्धृत्येत्यत्र विसर्जनीयलोपेपि पुनः संधिरार्षः एकतः एक- स्मिन् पात्रे उद्धृत्य कृत्वा अथानंतरं एनं कुमारं प्राशयेत् तूष्णीं मंत्ररहितं हंतेति वा मंत्रेण मंत्रं कुतः हंतकारं मनुष्याइति श्रुतेः हंत- कारं मनुष्याउपजीवंति इतिश्रवणात् भारद्वाजयामांठसेन वाक्प्रसार कामस्य कपिंजलमांठसेनान्नाद्यकामस्य मत्स्यैर्जवनकामस्य सर्वैः सर्वकामस्यान्नपर्यायवा अत्र गुणफलमाह भारद्वाज्याः पक्षिण्याः मांसेन कुमारस्य प्राशनं कारयितव्यं भवति कस्य पितुः कथंभूतस्य वाक्प्रसारकामस्य वाचः प्रसारोबहुत्वं तत्कुमारस्य कामयते इति- वाक्प्रसारकामः तस्य कर्त्तरि षष्ठी कृत्यप्रत्ययांतत्वात् एवमन्नाद्य- कामस्य कापिंजलमांसेन एवमुत्तरत्रापि अयमर्थः यदि कुमारः अयं वाग्मी स्यादिति कामयेत् तदा भारद्वाज्यामांसं प्राशयेत् यदि कु- मारोऽन्नादः स्यादितिकामयेत्तदा कपिंजलमांसं प्राशयेत् कपिंजलः कारंडवो मैरिर्वा मयूरोवा केचित्तित्तिरोवेति यदि कुमारोयं जवनः शीघ्रगामी स्यात्तदा यथासंभवं मत्स्यान् प्राशयेत् सयदि कुमारः दीर्घायुः स्यादिति कामयेत् तदा कृकषायामांसं प्राशयेत् यदि कुमारोब्रह्मवर्चस्वी स्यादिति कामयेत् तदा आटचामांसं प्राशयेत्

यादि वाक्प्रसारादीनि ब्रह्मवर्चसांतानि सर्वाणि कुमारस्य भवंत्विति कामयेत् तदा भारद्वाज्यादीनामाटचंतानां सर्वाणि मांसानि क्रमेण प्राशयेत् अन्नपर्यायवा अन्नपरिपाव्यावा अन्नवदेकीकृत्य प्राशयेदित्यर्थः अन्नपर्यायेति अविभक्तिकमार्षं पदं ततोब्राह्मणभोजनं। ततः कर्मसमाप्तौ एकस्य ब्राह्मणस्य भोजनं कारयितव्यं अत्र कांडपरिसमाप्तौ द्विरुक्तिः यथा कात्यायनसूत्रे अध्यायपरिसमाप्तौ उपस्पृशेदपउपस्पृशेदपइति सूत्रार्थः ॥ अथ प्रयोगः ॥ कुमारस्य षष्ठे मासे चंद्रतारानुकूले शुभे दिने मातृपूजापूर्वकं नांदीमुखश्राद्धं विधाय पंचभूसंस्कारान् कृत्वा लौकिकाग्निं स्थापयित्वा ब्रह्मोपवेशनाद्याज्यभागांतं विदध्यात् तत्र आज्येन देवीं वाचमजनयंत देवास्तां विश्वरूपाः पशवोवदंति सानो-मंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति प्रथमां इदं वाचे इति त्यागं विधाय पुनर्देवीं वाचमित्येतस्यांते वाजोनोअद्यप्रसूवाति-दानं वाजोदेवा देवाऋतुभिः कल्पयाति वाजोहिमा सर्ववीरं जजान विश्वाआशाव्वाजपतिर्जयेयᳪस्वाहेति द्वितीयं । इदं वाचे वाजायेति चेति त्यागं कुर्यात् अथ स्थालीपाकेन चतस्रआहुतीर्जुहोति तद्यथा प्राणेनान्नमशीय स्वाहा इदं प्राणाय अपानेन गंधानशीय स्वाहा इद-मपानाय चक्षुषा रूपाण्यशीय स्वाहा इदं चक्षुषे श्रोत्रेण यशोशीय स्वाहा इदं श्रोत्राय ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्या-हृत्यादि प्राजापत्यांतानवाहुतीराज्येन हुत्वा संस्रवप्राशनं दक्षिणादा नांतं कृत्वा सर्वान्रसान् सर्वं चान्नं एकस्मिन् पात्रे समुद्धृत्य सकृदे-व कुमारं तूष्णीं प्राशयेत् हंतेति वा मंत्रेण सयदि कुमारस्य वाग्मित्व-मिच्छेत्तदा भारद्वाज्यामांसं प्राशयेत् यद्यन्नाद्यत्वं कामयेत तदा क-पिंजलमांसं यादि जवनत्वं तदा मत्स्यमांसं यदि दीर्घायुष्ट्वं तदा कृक-षायाः मांसं यदि ब्रह्मवर्चसं तदा आव्यामांसं यदि सर्वकामस्तदा सर्वमांसानि क्रमेण प्राशयेत् एकीकृत्य वा अस्य कर्मणः समृद्ध्यर्थं

ब्राह्मणमेकं भोजयिष्ये इति संकल्प्य ब्राह्मणं भोजयेत् ॥ इत्यन्नप्राशनं ॥ इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां प्रयोगपद्धतौ प्रथमकांडः समाप्तः ॥ अथ चूडाकरणकेशांतौ तंत्रेण सूत्रयति ॥

सांवत्सारिकस्य चूडाकरणं ॥१॥ तृतीये वाप्रतिहते ॥ २ ॥ षोडशवर्षस्य केशांतः ॥ ३ ॥ यथामंगलं वा सर्वेषां ॥ ४ ॥ ब्राह्मणान्भोजयित्वा माताकुमारमादायाप्लाव्याहते वाससी परिधाप्यांकआधाय पश्चादग्नेरुपविशाति ॥ ५ ॥ अन्वारब्धआज्याहुतीर्हुत्वा प्राशनांते शीतास्वप्सूष्णाआसिंचति उष्णेन वा यउदकेनेह्यदिते केशान्वपेति ॥ ६ ॥ केशश्मश्रिवाति च केशांते ॥ ७ ॥ अथात्रनवनीतपिंडं घृतपिंडं दध्नोवा प्रास्यति ॥ ८ ॥ ततआदाय दक्षिणं गोदानमुंदति । सवित्रा प्रसूता दैव्याआपउंदन्तु ते तनूं दीर्घायुत्वाय वर्च्चसइति ॥ ९ ॥ त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यंतर्दधाति ओषधइति ॥ १० ॥ शिवोनामेति लोहक्षुरमादाय निवर्त्तयामीति प्रवपति येनावपत्सविता क्षुरेण सोमस्य राज्ञोवरुणस्य विद्वान् तेन ब्रह्माणोवपतेदमस्यायुष्यञ्जरदष्टिर्यथासदिति ॥ ११ ॥ सकेशानि प्रच्छिद्यानडुहे गोमयपिंडे प्रास्यत्युत्तर-

तोम्रियमाणे ॥ १२ ॥ एवं द्विरपरं तूष्णीं ॥ १३ ॥ इतरयोश्चौदनादि ॥ १४ ॥ अथ पश्चाञ्यायुषमिति ॥ १५ ॥ अथोत्तरतः येन भूरिश्चरादिवंज्योक्चपश्चया-सि सूर्यम् तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तयइति ॥ १६ ॥ त्रिः क्षुरेण शिरः प्रदक्षिणं परिहराति समुखं केशांते ॥ १८ ॥ यत्क्षुरेण मज्जयता सुपेशसा वप्ता वपति केशाञ्छिन्धि शिरो-मास्यायुः प्रमोषीः ॥ १९ ॥ मुखमिति च केशांते ॥ २० ॥ ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रय-च्छति । अक्षुण्वन्परिवपेति ॥ २१ ॥ यथामंगलं केश-शेषकरणं ॥ २२ ॥ अनुगुप्तमेतꣳसकेशं गोमयपिंडं निधाय गोष्ठे पल्वलउदकांते वाचार्याय वरं ददाति ॥२३॥ गां केशांते ॥२४॥ संवत्सरं ब्रह्मचर्यमवपनं च केशांते द्वादशरात्रꣳषड्रात्रं त्रिरात्रमंततः ॥ २५ ॥१॥

**सांवत्सरिकस्य चूडाकरणं तृतीये वाप्रतिहते ॥** संवत्सर-मब्दं अतिक्रांतः सांवत्सरिकः तस्य कुमारस्य चूडाकरणं चूडाकर्म कुर्यात् तृतीये वा संवत्सरे अप्रतिहते अल्पावशिष्टे ॥ **यथामंगलं वा सर्वेषां ॥** यद्वा यथामंगलं यथाकुलाचारं एतदुक्तं भवति यस्य कुले सांवत्सारिकस्य चूडाकर्म क्रियते तस्य सांवत्सरिकस्य यस्य तृतीयेब्दे तस्य तदा इति व्यवस्था यस्य कुले नास्ति नियमः तस्य यदृच्छया विकल्पः अन्ये तु यथामंगलशब्देन धर्मशास्त्रांतरे विहितकालांतरो-

पलक्षणमाहुः अतश्च सर्वेषां तुल्यविकल्पः ॥ **षोडशवर्षस्य केशांतः** ॥ शोडशवर्षाण्यतीतानि यस्य असौ षोडशवर्षः तस्य सप्तदशे वर्षे केशांतः केशांताख्यः संस्कारोभवति अत्र यद्यपि सूत्रक्रमोऽन्यथा तथापि केशांतस्य कालविकल्पाभावात् चूडाकरणएव कालविकल्पइति हेतोः ॥ **यथामंगलं वा सर्वेषामिति सूत्रं** ॥ पूर्वं व्याख्यातं पाठक्रमादर्थक्रमोबलीयानितिन्यायात् ॥ **ब्राह्मणान् भोजयित्वा माता कुमारमादायाप्लाव्याहते वाससी परिधाप्यांकआधाय पश्चादग्नेरुपविशति** ॥ एवं कालमभिधाय कर्माभिधत्ते चूडाकरणांगतया त्रीन् ब्राह्मणान् भोजयित्वा माता जननी कुमारं पुत्रं चूडाकरणार्हं आदाय गृहीत्वा आप्लाव्य स्नापयित्वा अहते नवे सकृद्धौते वाससी द्वे वस्त्रे परिधाप्य परिहिते कारयित्वा अंतरीयोत्तरत्वेन अंके उत्संगे आधाय स्थापयित्वा पश्चादग्नेःपश्चिमतः उपविशति आस्ते ॥ **अन्वारब्धआज्याहुतीर्हुत्वा प्राशनांते शीतास्वप्सूष्णाआसिंचति** ॥ ततः अन्वारब्धः ब्रह्मणा उपस्पृष्टः आज्याहुतीः आघारादिस्विष्टकृदंताश्चतुर्दश हुत्वा संस्रवप्राशनांते शीतासु अप्सु उष्णाअपआसिंचति प्रक्षिपति वक्ष्यमाणमंत्रेण अन्वारब्धग्रहणेन नित्याज्याहुतिहोमोनियम्यते ॥ **उष्णेन वा यउदकेनेह्यदिते केशान्वपेति केशश्मश्रिवाति च केशांते** ॥ केशांते पुनः उष्णेन वा यउदकेनेह्यदिते केशश्मश्रू वपतीति विशेषः ॥ **अथात्र नवनीतपिंडं घृतपिंडं दध्नोवा प्रास्यति** ॥ अथ उष्णोदकसेकानंतरं अत्र आस्वप्सु नवनीतपिंडं घृतपिंडं दध्नोवा पिंडं प्रास्यति असु क्षेपणे प्रक्षिपति ॥ **ततआदाय दक्षिणं गोदानमुंदति सवित्रा प्रसूताइति** ॥ ततस्ताभ्योऽद्भ्यः चुलुकेनैकदेशमादाय दक्षिणं गोदानं शिरसोदक्षिणप्रदेशस्थं गोदानं केशसमूहं उंदति क्लेदयति आर्द्रं करोतीत्यर्थः केन मंत्रेण सवित्रा प्रसूतेत्यादिना दीर्घायुत्वाय वर्चसइत्यतेन ॥ **त्र्येण्या शलल्या विनीय**

**त्रीणि कुशतरुणान्यंतर्दधात्योषधइति ॥** त्र्येण्या त्रिश्वेतया शलल्या शल्यकपक्षककंटकेन विनीय पृथक् पृथक्कृत्य पूर्वादिनाधिवासितां केशलतिकां तस्याअंतर्मध्ये अंतरा त्रीणि त्रिसंख्याकानि कुशतरुणानि दर्भपत्राणि दधाति धारयति ओषधे त्रायस्वेति मंत्रेण ॥ **शिवोनामेतिलोहक्षुरमादाय निवर्त्तयामीति प्रवपति** ॥ ततः शिवोनामेत्यनेन मंत्रेण लोहक्षुरं ताम्रपरिस्कृतमायसं क्षुरं आदाय गृहीत्वा दक्षिणकरेण निवर्त्तयामीत्यनेन मंत्रेण प्रवपति तं क्षुरं कुशतरुणान्यभिनिदधाति 'उपसर्गेण धात्वर्थोबलादन्यत्र नीयते' इतिन्यायात् धातूनामनेकार्थत्वाच्चेत्यत्र प्रपूर्वोवपतिरभिनिधानार्थः छेदनार्थत्वे तु उत्तरसूत्रविहितप्रच्छेदनानर्थक्यं प्रसज्येत ॥**येनावपत्सविता क्षुरेण सोमस्य राज्ञोवरुणस्य विद्वान् । तेन ब्रह्माणोवपतेदमस्यायुष्यं जरदष्टिर्यथा सदिति ॥ सकेशानि प्रछिद्यानडुहे गोमयपिंडे प्रास्यत्युत्तरतोध्रियमाणे ॥** येनावपदितिमंत्रेण केशसहितानि कुशतरुणानि प्रच्छिद्य खंडयित्वाग्रेरुत्तरतोभूभागे ध्रियमाणे स्थाप्यमाने आनडुहे आर्षभे गोमयपिंडे गोशकृत्पिंडे प्रास्यति प्रक्षिपति ॥ **एवं द्विरपरं तूष्णीं ॥** एवमुक्तेन प्रकारेण द्विः द्विर्वारं उंदनादि गोमयपिंडनिधानांतं तूष्णीं मंत्ररहितं कुर्यात् ॥ **इतरयोश्चोंदनादि** ॥ इतरयोः पश्चिमोत्तरयोः गोदानयोः उंदनादि क्लेदनप्रभृति कर्म्म चकारात्सकृन्मंत्रकं द्विरमंत्रकं भवति ॥ **अथ पश्चात् त्र्यायुषमिति ॥** अथ दक्षिणगोदानस्य त्रिरुंदनादिप्रच्छेदनानंतरं पश्चाद्गोदाने विशेषमाह । त्र्यायुषमिति त्र्यायुषं जमदग्नेरित्यादिना मंत्रेण सकेशानि कुशतरुणानि सकृत्प्रच्छिद्य तूष्णीं द्विः प्राच्छिद्य गोमयपिंडे प्रास्यति अथोत्तरतः अथानंतरं उत्तरतोगोदाने उंदनादि गोमयपिण्डनिधानान्ते विशेषमाह येन भूरिश्चेति स्वस्तयइत्यंतेन मंत्रेण सकृत्सकेशानां कुशतरुणानां प्रच्छेदनं ॥ **त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समु-**

**खं केशांते ॥** त्रिः त्रीन् वारान् क्षुरेण शिरः मूर्द्धानं प्रदक्षिणं यथा भवति तथा परिहरति शिरसः समंतात्प्रदक्षिणं क्षुरं भ्रामयतीत्यर्थः तत्र मंत्रमाह यत्क्षुरेणेत्यादिमास्यायुः प्रमोषीरित्यंतं केशांते च मुखामिति पदं प्रक्षिपेन्मंत्रे आवपेत् ताभिरद्भिः शिरःसमुद्य नापिताय क्षुरं प्रयच्छति ॥ अक्षुण्वन्परिवपेति ताभिः शीतोष्णाभिरद्भिः कुमारस्य शिरः समुद्य आर्द्रं विधाय नापिताय क्षौरकर्त्रे जातिविशेषाय क्षुरं अक्षुण्वन् परिवपेत्यनेन मंत्रेण प्रयच्छति ॥ **यथा मंगलं केश शेषकरणं ॥** केशानां शेषकरणं शिखास्थापनं केशशेपकरणं यथा मंगलं मंगलं कुलाचारव्यवस्थामनतिक्रम्य भवति कुलाचाराश्च बहुधा तद्यथा लौगाक्षिः 'तृतीयस्य वत्सरस्य भूयिष्ठे गते चूडां कारयेत्' दक्षिणतः कंबुजावसिष्ठानां उभयतोऽत्रिकश्यपानां मुंडाभृगवः पंच-चूडाआंगिरसः वाजिमेके मंगलार्थं शिखिनोन्यइति ॥ **अनुगुप्तमेतठं सकेशं गोमयपिंडं निधाय गोष्ठे पल्वलउदकांते वा ॥** अनुगुप्तमावृतं एनं गोमयपिंडं सकेशं केशैः सहितं निधाय स्था-पयित्वा गोष्ठे गवां व्रजे पल्वले अल्पोदके सरसि उदकांते वा ॥ **आचार्याय वरं ददाति ॥** स्वकीयाय आचार्याय गां ददाति संव-त्सरं ब्रह्मचर्यं केशांतकर्मानंतरं संवत्सरं यावत् भवेत् ॥ **द्वादशरात्र-ठं-षड्रात्रं त्रिरात्रमंततः ॥** केशान्तानंतरं यावज्जीवमवपनं च विहि-तवपनव्यतिरेकेणाविहितवपनं च " गंगायां भास्करक्षेत्रे मातापित्रो-र्गुरौ मृते । आधाने सोमपाने च वपनं सप्तसु स्मृतं ॥ तथावपनं चाँनु-भाविनां प्रेतकनीयसां वपनं तथा । मुंडनं चोपवासश्च सर्व्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयां ॥ नैमिषं पुष्करं गयामिति पाठांतरं " प्रयागे वपनं कुर्याद्गयायां पिण्डपातनं । दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनूं त्यजेत् " इत्यादिवचनानि च यत्प्रति

* शावं दुःखमनुभवंतीत्यनुभाविनः सपिंडाः । अनु पश्चाद्भवंतीत्यनुभाविनः ॥

पादितनिमित्तेषु अत्र गर्भाधानादिषु विवाहपर्यंतेषु संस्कारकर्मसु मुख्यत्वेन पितैव कर्त्ता तदभावे सन्निहितोन्यः तथा च स्मरणं "स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां तस्याभावेपि तत्क्रमात्" ॥ एतान्युक्तानि नामकरणादीनि चूडाकरणांतानि मंत्ररहितानि दुहितृणामपि कुर्यात् यथाह याज्ञवल्क्यः "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रकइति" तथा शूद्रस्य यथाह यमः "शूद्रोऽप्येवं विधः कार्योविना मंत्रेण संस्कृतः । न केनचित्समसृजच्छंदसा तं प्रजापतिः" एवंविधः गर्भाधानादिचूडाकरणांतैः संस्कारैर्बैजिकगार्भिकपापशून्यः विना मंत्रेण तूष्णीं यतस्तं शूद्रमेकतमेनापि छंदसा वेदेन समसृजत् समयोजयत् तथा ब्रह्मपुराणे 'विवाहमात्रं संस्कारं शूद्रोपि लभतां सदा' मात्रशब्देन विहितेतरसंस्कारनिवृत्तिश्च यमब्रह्मपुराणवचनाभ्यां शूद्रस्य गर्भाधानपुंसवनसीमंतजातकर्मनामधेयनिष्क्रमणान्नप्राशनचूडाकरणविवाहाः नव संस्कारावेहितास्ते च तूष्णीं इतरेषां निवृत्तिः प्रसंगादनुपनीतधर्मालिख्यंते मनुः 'नास्मिन्व्युत्तिष्ठते कर्म्म किंचिदामौंजिबंधनात् । नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ शूद्रेण हि समस्तावद्यावद्वेदे न जायते । वृद्धशातातपः । 'प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः । कुमारस्तु सविज्ञेयोयावन्मौंजीनिबंधनं ॥ शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतं । रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः । गौतमः । प्रागुपनयनात्कामचारभक्षः नित्यं मद्यं ब्राह्मणोनुपनीतोपि वर्जयेत् उच्छिष्टादावप्रयतान स्युः महापातकवर्जं ब्राह्मे 'मातापित्रोरथोच्छिष्टं बालोभुंजन् भवेत्सुखी । संस्कारयोजनं च स्मृत्यंतरोक्तं यथाह याज्ञवल्क्यः 'एवमेनः शमं याति बीजगर्भसमुद्भवं' अंगिराः । चित्रकर्म यथानेकैरागैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः । मनुः । गार्भैर्होमैर्जातककर्म चौडमौंजीनिबंधनैः । बैजिकं गार्भिकं चैनोद्विजानामपमृज्यते ॥

हारीतः ॥ गर्भाधानवदुपेतो ब्रह्मगर्भं सदधाति पुंसवनात्पुंसीकरोति फलस्नपनात्पितृजं पाप्मानमपोहति जातकर्मणा प्रथममपोहति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूडाकरणेन चतुर्थं स्नानेन पंचमं एतैरष्टाभिर्गर्भसंस्कारैर्गर्भोपघातात्पूतोभवति उपनयनाद्यैश्च व्रतैश्चाष्टभिः स्वच्छंदसम्मितोब्राह्मणः परं पात्रं देवपितॄणां भवति छंदसायनं सुमंतुः ॥ तत्र ब्राह्मणक्षत्रियवैश्यानां वृत्तिर्गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पंचानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मयज्ञानामेतेषां चाष्टकाः पार्व्वणश्राद्धं श्रावण्याग्रहायणीचैत्याश्वयुजीतिपाकयज्ञसंस्थाः अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्याग्रयणेष्टिर्न्निरूढपशुबंधः सौत्रामणीतिसप्तहविर्यज्ञसंस्थाः अग्निष्टोमोत्यग्निष्टोमउक्थ्यषोडशी वाजपेयोतिरात्रोऽप्तोर्यामइति सप्तसोमसंस्थाः एते चत्वारिंशत्संस्काराः । हारीतः । द्विविधएव संस्कारोभवति ब्राह्मोदैवश्च गर्भाधानादिस्नानान्तोब्राह्मः । पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः । ब्राह्मसंस्कारसंस्कृतऋषीणां समानतां सालोक्यतां सायुज्यतां गच्छतीत्यलमतिप्रसंगेन इति सूत्रार्थः ॥ ॥ अथ प्रयोगः ॥ तत्र सांवत्सरिकस्य तृतीये वा वर्षे भूयिष्टे गते कुमारस्य चूडाकरणाख्यं कर्म्म कुर्यात् कुलधर्मव्यवस्थया वा दैवयोगादुक्तोक्तकालालाभे स्मृत्यंतरोक्तान्यतमकाले मातृपूजामाभ्युदयिकं च कृत्वा ब्राह्मणत्रयं भोजयित्वा बहिः शालायां परिसमूहनादिभिर्भुवं संस्कृत्य लौकिकाग्निं स्थापयेत् । अथ माता कुमारमादाय स्नापयित्वा वासोयुगं परिधाप्य उत्संगे निधाय अग्नेः पश्चिमतः उपविशति ततोब्रह्मोपवेशनाद्याज्यभागांते विशेषः । तंडुलयवमाषादनं उपकल्पनीयानि च शीतोदकमुष्णोदकं नवनीतघृतदधिपिंडानामेकतमं श्येणी शलली त्रीणि त्रीणि कुशतरुणानि पृथक् बद्धानि नवताम्रपरि-

स्कृतआयसः क्षुरः गोमयापिंडं नापितश्चेति ततः पवित्रकरणादि पर्युक्षणांते आघारादिस्विष्टकृदंतं चतुर्दशाहुतिहोमं विधाय संस्रवान्प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दद्यात् ततः शीतास्वप्सु उष्णाअपआसिच्य उष्णेनवा यउकेनेह्यदितेकेशान्वपेत्यनेन मंत्रेण अत्र उष्णोदकमिश्रितशीतोदके उपकल्पितं नवनीताद्यन्यतमं पिण्डं प्रक्षिपति तदुदकमादाय सवित्रा प्रसूता दैव्या आप उंदंतु ते तनुं दीर्घायुत्वाय वर्चसइत्यनेन मंत्रेण दक्षिणं गोदानमुंदति ततस्त्र्येण्या शलल्या केशान्विनीय ओषधे त्रायस्वेति मंत्रेण कुशतरुणान्यंतर्द्धाय शिवोनामासिस्वधितिस्ते पिता नमस्ते अस्तु मामाहिꣳसीरित्युपकल्पितं क्षुरमादायकुशतरुणान्तर्हितेषु केशेषु निवर्त्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेत्यनेन मंत्रेण क्षुरमभिनिदधाति येनावपत्सविता क्षुरेण सोमस्य राज्ञोवरुणस्य विद्वान् तेन ब्रह्माणोवपतेदमस्यायुष्यं जरदष्टिर्यथासदित्यंतेन मंत्रेण सकेशकुशतरुणानि प्रच्छिद्य आनडुहे गोमयपिंडउत्तरतोध्रियमाणे प्रक्षिपति एवमेवापरं वारद्वयं उंदनकेशविनयनकुशतरुणांतर्द्धानक्षुराभिनिधानसकेशकुशतरुणप्रच्छेदनगोमयपिण्डप्रासनानि तूष्णीं कुर्यात् तथा पश्चिमोत्तरयोर्गोदानयोः एवमेव सकृत्समंत्रकं द्विस्तूष्णीं करोत्येतावान्विशेषः पश्चिमगोदाने त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषमितिछेदनम् उत्तरतोगोदाने येन भूरिश्चरादिवंज्योक्च पश्याधिसूर्यं तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये इत्यनेन मंत्रेण छेदनं अन्यत्सर्वमुंदनादि गोमयपिण्डप्रासनांतं समानं ततोयत्क्षुरेण मज्जायिता सुपेशसा वप्ता वा वपति केशांछिंधि शिरोमास्यायुः प्रमोषीरित्यंतेन मंत्रेण शिरसः समंतात्प्रदक्षिणं क्षुरं भ्रामयति सकृन्मंत्रेणद्विस्तूष्णीं ततस्तेनैवोदकेन समस्तं शिरआर्द्रमापाद्य अक्षण्वन्परिवपेत्यंतेन मंत्रेण नापिताय क्षुरं समर्पयति सच नापितः

सकेशवपनं कुर्वन् यथोक्तं केशशेषकरणं करोति ततःसकेशं गोमयपिंडं अनुगुप्तं पल्वले गोष्ठे उदकांते वा निधाय चूडाकरणकर्त्ता स्वाचार्याय वरं ददाति केशांतेपि षोडशवर्षस्य सप्तदशे वर्षे इयमेव चूडाकरणोक्ता इतिकर्त्तव्यता एतावांस्तु विशेषः उष्णोदकसेकमंत्रउष्णेन वा यउदके-नेह्यदिते केशश्मश्रुवपनं तथा क्षुरपरिहरणे मुखसहितं शिरः परिहरति तत्र परिहरणमंत्रे च यत्क्षुरेण मज्जतेत्यादिमास्यायुःप्रमोषीर्मुखं तथा यस्य यस्य केशांतः सस्वाचार्याय गां ददाति संवत्सरं वा द्वादशरात्रं षड्रात्रं त्रिरात्रं वा ब्रह्मचर्यं करोति शक्त्यपेक्षया विकल्पः तथा के-शांतादूर्ध्वं शास्त्रीयवपनव्यतिरेकेण यावज्जीवमवपनं शास्त्रीयवपनं च ॥

**अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वा ॥ १ ॥ एकादशवर्षंठराजन्यं ॥ २ ॥ द्वादशवर्षं वैश्यं ॥ ३ ॥ यथामंगलं वा सर्वेषां ॥ ४ ॥ ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसमलंकृतमानयंति ॥ ५ ॥ पश्चादग्नेर-वस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसा-नीति च ॥ ६ ॥ अथैनं वासः परिधापयति येनेंद्राय बृहस्पतिर्वासः पर्यदधादमृतं तेन त्वा परिदधाम्या-युषे दीर्घायुत्वाय बलाय वर्चसइति ॥ ७॥ मेखलां बध्नीते । इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती मआगात् । प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति ॥ ८ ॥ युवा सुवासाः परिवीतआगात्सउश्रेयान्भवति जाय-मानः । तं धीरासः कवयउन्नयंति स्वाध्योमनसा**

देवयंतइति वा ॥ ९ ॥ तूष्णींवा ॥ १० ॥ (यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्य-मग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोप नह्यामीत्यथाजिनं प्रयच्छति मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजोयशस्वी स्थविरꣳसमिद्धं अनाहनस्यं वसनं जरिष्णु परीदं वाज्याजिनं दधेहमिति) दंडं प्रयच्छति ॥ ११ ॥ तं प्रतिगृह्णाति योमे दंडः परापतद्वैहायसोऽधिभूम्यां तमहं पुनराददआयुषे ब्र-ह्मणे ब्रह्मवर्चसायेति ॥ १२ ॥ दीक्षावदेके दीर्घसत्र-मुपैतीति वचनात् ॥ १३ ॥ अथास्याद्भिरंजलिनां-जलिं पूरयति आपोहिष्ठेति तिसृभिः ॥ १४ ॥ अ-थैनꣳसूर्यमुदीक्षयाति तच्चक्षुरिति ॥ १५ ॥ अथा-स्य दक्षिणाꣳसमधिहृदयमालभते । मम व्र-ते ते हृदयं दधामीति । मम चित्तमनुचित्तं तेअस्तु-मम वाचमेकमनाजुषस्व बृहस्पतिष्ट्वा नियुनक्तु-मह्यामिति ॥ १६ ॥ अथास्य दक्षिणꣳहस्तं गृहीत्वाह कोनामासीति ॥ १७ ॥ असावहं भो ३ इति प्रत्याह ॥ १८ ॥ अथैनमाह कस्य ब्रह्मचार्य-सीति ॥ १९ ॥ भवतइत्युच्यमानइंद्रस्य ब्रह्मचार्य-

**स्यग्निराचार्यस्तवाहमाचार्यस्तवासाविति ॥ २० ॥ अथैनं भूतेभ्यः परिददाति प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधिभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्याइति ॥ २१ ॥ ॥ २ ॥**

॥ **अष्टवर्षंब्राह्मणमुपनयेद्गर्भाष्टमे वा** ॥ अष्टौ वर्षाणि अतीतानि यस्य असौ अष्टवर्षस्तं ब्राह्मणं द्विजोत्तमं उपनयेत् उपनयनाख्येन संस्कारेण संस्कुर्यात् गर्भाष्टमेषु वा गर्भः अष्टमोयेषां तानि गर्भाष्टमानि तेषु वा उपनयेत् ततश्च जन्मतोनवमेऽष्टमे वा उपनयेदित्यर्थः ॥**एकादशवर्षंराजन्यं** ॥ एकादशवर्षाण्यतीतानि यस्य असौ एकादशवर्षस्तं जन्मतोद्वादशवर्षइत्यर्थः राजन्यं क्षत्रियं उपनयेदित्यनुषज्यते ॥**द्वादशवर्षं वैश्यं** ॥ द्वादशवर्षाण्यतिक्रांतानि यस्य सतथा तं जन्मतस्त्रयोदशे वैश्यमुपनयेत् ॥ **यथामंगलं वा सर्वेषां** ॥ पक्षांतरमाह अथ वा सर्वेषां ब्राह्मणक्षत्रियविशां यथामंगलं यथामंगलधर्मं यद्वा यथामंगलशब्देन स्मृत्यंतरोक्तपंचवर्षादिकालसंग्रहः यथाह मनुः "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे । राज्ञोबलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ आपस्तंबोपि । अथ काम्यानि सप्तमे ब्रह्मवर्चसकामं अष्टमे आयुष्कामं नवमे तेजस्कामं दशमे अन्नाद्यकामं एकादशे इंद्रियकामं द्वादशे पशुकाममुपनयेत् तथा वसंते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं गर्भाष्टमे वर्षे वसंते ब्राह्मणआत्मानमुपनापयेत् एकादशे क्षत्रियोग्रीष्मे द्वादशे वैश्योवर्षासु वर्षाशब्देन शरदेवाभिधीयते ऋतुः संवत्सरोग्रीष्मोवर्षाहेमंतइति यास्कवचनात् वर्षा-

इति त्यागं विधाय नवै श्वेतस्या द्व्याचारेहिदर्शनकंचन श्वेताय वैद-र्व्याय नमः स्वाहेति मंत्रेण द्वितीयामाहुतिं हुत्वा इदं श्वेताय वैद-र्व्यायेत्युक्त्वा स्थालीपाकेन चतस्र आहुतीर्जुहोति तद्यथा विष्णवे स्वाहा इदं विष्णवे श्रवणाय स्वाहा इदं श्रवणाय ॥ श्रावण्यै पौर्ण-मास्यै स्वाहा इदं श्रावण्यै पौर्णमास्यै वर्षाभ्यः स्वाहा इदं वर्षाभ्यः अथ धानावंतं करं भिणमित्यृचा धानामेकाहुतिं हुत्वा इदमिंद्रायेति त्यक्त्वा सक्तूनामाहुतित्रितयं जुहुयात् यथा आग्नेयपांडुपार्थिवाना ठें· सर्प्पाणामधिपतये स्वाहा इदं शब्दयुक्तः स्वाहाकाररहितोयमत्रएव त्यागः त्रिषु श्वेतवायवांतरिक्षाणा ठें· सर्पाणा मधिपतये स्वाहा अभिभूः सौर्यदिव्याना ठें· सर्पाणामधिपतये स्वाहा ततो ध्रुवाय भौमाय स्वाहे ति सर्वं पुरोडाशं स्रुवे कृत्वा जुहुयात् इदं ध्रुवाय भौमायेति त्यक्त्वा चरुधानासक्तुभ्य उत्तरतः किंचिंकिंचिदादाय स्विष्टकृतं विधाय महा-व्याहृतिहोमं संस्रवप्राशनं ब्रह्मणे दक्षिणादानांतं कुर्यात् अथ हुत-शेषसक्तूनामेकदेशं शूर्पे प्रक्षिप्यादायोदपात्रं दर्वीकंकतत्रयांजनानु-लेपनस्रजश्च शालायाबहिर्निष्क्रम्य ब्रह्मणा उल्काधारेण सह स्वांगणे हस्तमात्रं स्थंडिलं स्वयमुपलिप्य लौकिकाग्न्युल्कायां ध्रियमाणायामांत रागमतेतिप्रैषमुच्चार्य वाग्यत स्थंडिले उदपात्रमादायाग्नेयइत्यादिना अधिपतेऽवनेनिक्ष्वेत्यंतेन एकत्रावनेजनार्थं जलं दत्वा श्वेतवायवेत्यादिना अधिपतेऽवनेनिक्ष्वेत्यंतेन द्वितीयं अभिभूः सौर्येत्यादिना तथैव तृतीयं सर्प्पानवनेजयति ततोवनेजनस्थानेषु अवनेजनक्रमेण एतैरेवमंत्रैरेषते बलिरित्यंतैस्त्रिभिः प्रतिमंत्रं बलिं हरति ततःपूर्ववदवनेज्य कंकतत्रयेण प्रलिखस्वेत्यंतैः एतैरेव मंत्रैः प्रतिबलिं प्रतिमंत्रं प्रलिखति ततोंजस्वेत्यंतै-रुक्तमंत्रैः प्रतिबलिं प्रतिमंत्रं अंजनं ददाति तथैवानुलिंपस्वेत्यनुलेपनं एवमेव स्रजोनह्यस्वेति पुष्पमालां दत्वा सक्तुशेषं स्थंडिले क्षिप्त्वा उद-पात्रजलेन प्रप्लाव्य नमोस्तु सर्वेभ्यइत्यादिभिस्तिसृभिर्ऋग्भिः सर्पा-

स्तिष्ठन्नुपतिष्ठते ततः सगृहपतिः एतावंतं देशं सर्पान प्रविशेयुरिति यावत्कामयेत तावंतं देशं संततोदकधारया त्रिः परिषिंचन् गृहं परीयात् अपश्वेतपदा जहीति पूर्वोक्तमंत्राभ्यां सकृत् द्विस्तूष्णीं ततोदर्वीं शूर्पं च प्रक्षाल्योल्कायां सकृत्प्रतप्योल्काधारायांप्रयच्छति अथ शालाद्वारि आपोहिष्ठेति तृचेन ब्रह्मयजमानोल्काधाराः मार्जयंते जलेनात्मानं ततोधानाः प्राश्नंति ब्रह्मयजमानोल्काधाराअनवखंडयंतः ततोब्राह्मणभोजनमेतावच्छ्रवणाकर्म ॥ अथ प्रत्यहंबलिहरणप्रयोगः ॥ सक्तुशेषं सुगुप्ते भांडे स्थापयित्वा ततःअस्तमितेसूर्ये सक्तुदर्वीकंकतत्रयं निधायोदपात्रंगृहीत्वा सोल्कारः शालायाबहिरुपलेपनादि परिलेखनातं बलिहरणं अनुदिनं पूर्ववत्कुर्यात् आग्रहायणीं यावत् मांतरागमतेति प्रैषाभावेऽपि कश्चित् अंतरा न गच्छेत् दर्वीमुखमेव प्रक्षालयेदिति अहरहर्बलिदानविधिः

**प्रौष्ठपद्यामिंद्रयज्ञः ॥ १ ॥ पायसमैंद्रꣳ श्रपयित्वाऽपूपाꣳश्चापूपैस्तीर्त्वाऽज्यभागाविष्ट्वाज्याहुतीर्जुहोतींद्रायेंद्राण्याऽअजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति ॥ २ ॥ स्थालीपाकस्यजुहोतींद्रायस्वाहेति प्राशनांते मरुद्भ्यो बलिꣳ हरत्यहुतादोमरुत इतिश्रुतेः ॥ ३ ॥ आश्वत्थेषुपलाशेषुमरुतोऽश्वत्थे तस्थुरितिवचनात् ॥ ४ ॥ शुक्रज्योतिरितिप्रतिमंत्रं ॥ ५ ॥ विमुखेन च ॥ ६ ॥ मनसा ॥ ७ नामान्येषामेतानीति श्रुतेः ॥ ८ ॥ इन्द्रंदैवीरिति जपति ॥ ९ ॥ ततोब्राह्मणभोजनम् ॥ १० ॥ ॥ १५ ॥**

॥ **प्रौष्ठपद्यामिंद्रयज्ञः** ॥ प्रौष्टपदीभाद्रपदीप्रकरणात् पौर्णमासी तस्यां इंद्रयज्ञनामधेयं कर्म भवति औपासनाग्नौ ॥ **पायसमैंद्रंश्रपयित्वाऽपूपांश्च** ॥ पायसं पयसा सिद्धं चरुं ऐंद्रं इंद्रदैवत्यं श्रपयित्वा यथाविधि पक्त्वाअपूपांश्च चतुरः श्रपयित्वा तांश्च चतुरः प्रतिदिशं स्तरणार्थं ऐंद्रमित्यनेन देवतातद्धितेन इंद्राय स्वाहेति होमस्य मंत्रांतरस्य चानुक्तत्वात् अत्र पायसश्रपणोपदेशात् पयश्च प्रणीयते ॥ **अपूपैस्तीर्त्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोतींद्रायेंद्राण्या-अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति** ॥ अपूपैः प्रतिदिशमाग्निं स्तीर्त्वा परिस्तीर्य आज्यभागौ हुत्वा इंद्रायेत्यादिभिःस्वाहांतैः पंचभिर्मंत्रैः प्रतिमंत्रं पंचाहुतीर्जुहोति अत्रानुक्तोऽपि पायसेन इंद्राय स्वाहेत्येकाहुतिहोमः अन्यथा पायसश्रपणमदृष्टार्थं स्यात् ॥ **प्राशनांते मरुद्भ्योबलिंहरत्यहुतादोमरुतइतिश्रुतेः** ॥ ततः स्विष्टकृदादिप्राशनांते मरुद्भ्यः एकोनपंचाशत्संख्येभ्योदेवताभ्यः बलिं ददाति ननु मरुतां देवतात्वे सति कथं होमसंबंधरहितत्वंबलिदानार्हत्वं च शृणु अहुतादोमरुतइतिश्रुतेः अहुतमदंतीत्यहुतादः मरुतादेवाइति श्रुतेः वेदवचनात् ॥ **आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात्** ॥ मरुद्भ्योबलिंहरतीत्युक्तंतस्याधिकरणमुच्यते अश्वत्थस्य इमानि आश्वत्थानि तेषु पिप्पलोद्भवेषु पत्रेषु बलिं हरतीति शेषः ननु बलिहरणं भूमौ अन्यत्र दृश्यते इह कस्मादश्वत्थपत्रेष्विति शंकते आह मरुतः शुक्रज्योतिप्रभृतयोयस्मात् अश्वत्थेतस्थुः स्थितवंत इति वचनात् श्रुतेः ॥ **शुक्रज्योतिरिति प्रतिमंत्रं** ॥ **विमुखेन च** ॥ **मनसा** ॥ **नामान्येषामेतानीति श्रुतेः** ॥ मंत्रापेक्षायामाह शुक्रज्योतिरित्येवादिभिर्मंत्रैः नमस्कारांतैः प्रतिमंत्रं विमुखेनं च उग्रश्च भीमश्चेत्येवमादिना अध्येतृप्रसिद्धेन मनसा मनोव्यापारेण बलिं हरतीति कुतः एभिर्मंत्रैर्बलिहरणं एषां मरुतां एतानि शुक्रज्योतिश्चचित्रज्योतिश्चेत्येवमादीनि

विक्षिपइत्यंतानि नामानि इति श्रुतेः वेदचनात् ॥ **इंद्रं दैवीरिति जपति** ॥ बलिहरणांते इंद्रं दैवीरित्येतामृचं जपति ॥ **ततोब्राह्मणभोजनं** ॥ इतिसूत्रार्थः ॥ अथप्रयोगः ॥ भाद्रपदपौर्णमास्यां प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधायावसाथ्याग्नौ इंद्रयज्ञाख्यं कर्म कुर्यात् तत्र ब्रह्मोपवेशनादिप्राशनांते विशेषः सक्षीरं प्रणयनं मूलदेशे पयः इतरत्र जलं प्रक्षिप्य प्रणयेत् उपकल्पनीयानि तंडुलपिष्टं समाश्वत्थपर्णानि ततआज्यनिर्वापानंतरं प्रणीताभ्यः क्षीरमुत्सिच्य चरुपात्रे तंडुलान्प्रक्षिप्य प्रणीतोदकेन पिष्टं संपूय चतुरोऽपूपान्निर्मायाज्यमधिश्रित्य तदुत्तरतः कर्परे चतुरोऽपूपान् अधिश्रयति आसादनक्रमेणोद्वासनादि ततउपयमनकुशादानात् पूर्वं अपूपैः अग्नेः पुरस्तात् दक्षिणतः पश्चिनतः उत्तरतश्च एकैकेन परिस्तरणं कृत्वाऽऽज्यभागांते पंचाज्याहुतीर्जुहोति इंद्राय स्वाहा इदमिंद्राय इंद्राण्यै स्वाहा इदमिंद्राण्यै अजायैकपदे स्वाहा इदमजायैकपदे अहिर्बुध्न्याय स्वाहा इदमहिर्बुध्न्याय प्रौष्टपदाभ्यः स्वाहा इदं प्रौष्टपदाभ्यः ततः पायसेन इंद्राय स्वाहेत्येकामाहुतिं हुत्वा इदमिंद्रायेति त्यक्त्वा पायसेनैव स्विष्टकृद्धोमं विधाय महाव्याहृत्यादिहोमसंस्रवप्राशनदक्षिणादानानि कुर्यात् अथाग्नेरुत्तरतः प्राक्संस्थानि प्रागग्राणि सप्ताश्वत्थपत्राणि निधाय तेषु मरुद्भ्योबलीन् हरति पायसशेषं स्रुवेणादायादाय शुक्रज्योतिरित्येवमादिभिः षड्भिर्मंत्रैर्नमस्कारांतैरुग्रश्च भीमश्चेत्येतेनैव सप्तमेन च मनसोच्चारितेन च प्रतिमंत्रं सप्तसु मंत्रेषु यथाक्रमं स्पष्टार्थं ॥ प्रयोगउच्यते त्यागश्च शुक्रज्योतिश्चेत्यारभ्य ऋतपाश्चात्यंहानमः इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिष्मते शुक्राय ऋततपसे त्यंहसे च ईदृङ्चान्यादृङ्चेत्यादिसरभसेनमः इदमीदृशे अन्यादृश सदृशे प्रतिसदृशे मिताय संमिताय सरभसेच ऋतश्चेत्यादिविधारये नमः इदममृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधारयाय ऋतादित्यारभ्य

गणोनमः इदमृतजिते सत्यजिते सेनजिते सुषेणाय अंतिमित्राय दुरे अमित्राय गणाय च इदृक्षासइत्यारभ्य यज्ञे अस्मिन्नमः इदमीदृक्षेभ्यः एतादृक्षेभ्यः प्रतिसदृक्षेभ्योमितेभ्यः संमितेभ्यः सभरेभ्योमरुद्भ्यश्च स्वतवांश्चेत्यादि उज्जेषिणेनमः इदं स्वतवसे प्रघासिने सांतपनाय गृहमेधिने क्रीडिने शाकिने उजेषिणे च उग्रश्चेत्यारभ्य विक्षिपः स्वाहा नमः मनसा इदमुग्राय भीमाय ध्वांताय धुनये सासव्हभियुग्वने विक्षिपाय चेत्यपि मनसा ततइंद्रं देवीरित्येतामृचं जपति यजमानः ततोब्राह्मणभोजनमिति ॥

**आश्वयुज्यां पृषातका ॥ १ ॥ पायसमैंद्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥ २ ॥ प्राशनांते दधिपृषातकमंजलिना जुहोति ऊनं मे पूर्यतां पूर्णं मे माविगात्स्वाहेति ॥ ३ ॥ दधिमधुघृतमिश्रममात्याअवेक्षंतआयात्विंद्रइत्यनुवाकेन ॥ ४ ॥ मातृभिर्वत्सान्त्सꣳसृज्य ताꣳरात्रिमाग्रहायणीं च ॥ ५ ॥ ततोब्राह्मणभोजनम् ॥ ६ ॥ १६**

आश्वयुज्यां पृषातका ॥ पृषातकाइतिसंज्ञकं कर्म भवति पृषातका आश्वयुज्यां पौर्णिमायां भवति ॥ **पायसमैंद्रꣳश्रपयित्वा दधिमधुघृतमिश्रं जुहोति** ॥ तत्र ऐंद्रं इंद्रदैवत्यं पायसं चरुं संसाध्य दधिमधुघृतैर्मिश्रं कृत्वा आवसथ्याग्नौ जुहोति केभ्यइत्याह ॥ **इंद्रायेंद्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदेचेति** ॥ इंद्रायेत्यादिभिः पंचभिर्मंत्रैः स्वाहाकारांतैः प्रतिमंत्रं पंचाहुतीर्जुहोति यथा मंत्रवर्णत्यागः ॥ **प्राशनांते दधिपृषातकमंजलिना जुहोत्यूनं मे**

**पूर्यतां पूर्णम्मे माविगात्स्वाहेति** ॥ ततः स्विष्टकृत्प्रभृति प्राशनांते दध्ना पृषातकं पृषदाज्यं दधिपृषातकमंजलिना ऊनं मइत्यादिना मंत्रेण जुहोति पृषदाज्यं घृते दधिप्रक्षेपाद्भवति ॥ **दधिमधुघृतमिश्रममात्या अवेक्षंत आयात्विंद्रइत्यनुवाकेन** ॥ ततोदधिमधुघृतमिश्रं हुतशेषं पायसं अमात्या अमा च गृहं तत्र भवा अमात्यायजमानस्य गृह्याः भ्रातृपुत्रादयः आयात्विंद्रोवस उपनइत्यारभ्य यूयं पात स्वस्तिभिः सदा नइत्यंतेन अनुवाकेनावेक्षंते पश्यंति ॥ **मातृभिर्वत्सान्सꣳसृज्यताꣳरात्रिं** ॥ तां आश्वयुजीसंबंधिनीं रात्रिं वत्सान् मातृभिर्जननीभिर्धेनुभिः सꣳसृज्य संसृष्टान् कृत्वा तां रात्रिमिति कालाध्वनोरत्यंतसंयोगे इत्युपपदविभक्तिः द्वितीया तेन संध्यायां वत्सान् सꣳसृज्य सकलां रात्रिं न बध्नीयात् ॥ **आग्रहायणींच** ॥ न केवलं तामेव रात्रिं वत्ससंसर्गः आग्रहायणीं च मार्गशीर्षसंबंधिनीमपि रात्रिं ॥ **ततो ब्राह्मणभोजनमिति** ॥ सूत्रार्थः ॥ अथ प्रयोगः तत्र आश्वयुज्यां पौर्णमास्यां पृषातकाख्यं कर्म भवति तद्यथा प्रथमप्रयोगे मातृपूजाभ्युदयिकपूर्वकं आवसथ्याग्नौ ब्रह्मोपवेशनादि प्राशनांते विशेषः सक्षीराः प्रणीताः प्रणयेत् दधिमधुनी उपकल्पयेत् प्रणीताः क्षीरेण पायसं श्रपयेत् ततउपयमनकुशादानादर्वाक् पायसे दधिमधुघृतानि श्रपयेत् आज्यभागानंतरं दधिमधुघृतमिश्रेण पायसेन इंद्राय स्वाहा इदमिंद्राय इंद्राण्यै स्वाहा इदमिंद्राण्यै अश्विभ्यां स्वाहा इदमश्विभ्यां आश्वयुज्यै पौर्णमास्यै स्वाहा इदमाश्वयुज्यै पौर्णमास्यै शरदे स्वाहा इदं शरदे एवं पंचाहुतीर्हुत्वा तत एव पायसात् स्विष्टकृतं हुत्वा महाव्याहृत्यादिदक्षिणादानांते स्थाल्याज्यं दधि आसिच्य पृषदाज्यं कृत्वा अंजलिनाऽदाय ऊनं मे पूर्यतां पूर्णं मे माविगात्स्वाहेति मंत्रेणैकामाहुतिं जुहोति इदमग्नये ततोदधिमधुघृतमिश्रं हुतशेषं पायसं अमात्याः पुत्रादयः आयात्विंद्रइत्यनुवाकेन यूयं पात स्वस्तिभिः सदा नइत्यंतेन अवेक्षंते ततोब्राह्मणभोजनं कृतैतत्कर्मांगतया ब्राह्मणमेकं भोजयिष्ये ॥

अथसीतायज्ञः ॥ १ ॥ व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत् ॥ २ ॥ कामादीजानोन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत् ॥ ३॥ नपूर्वचोदितत्वात्सन्देहः ॥ ४ असंभवाद्विनिवृत्तिः ॥ ५ ॥ क्षेत्रस्य पुरस्तादुत्तरतोवा शुचौ देशे कृष्टे फलानुपरोधेन ॥ ६ ॥ ग्रामे वोभयसंप्रयोगादविरोधात् ॥ ७ ॥ यत्र श्रपयिष्यन्नपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ ८ ॥ पृथिवी द्यौः प्रदिशोदिशोयस्मै द्युभिरावृताः तामिहेन्द्रमुपह्वये शिवानः संतु हेतयः स्वाहा । यन्मे किंचिदुपेप्सितमास्मिन् कर्मणि वृत्रहन् तन्मे सर्वꣳ समृध्यतां जीवतः शरदःशतꣳ स्वाहा ॥ संपत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा यस्याऽभावे वैदिकलौकिकानां भूतिर्भवति कर्मणां इंद्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा ॥ अश्वावती गोमती सूनृतावती बिभर्त्ति या प्राणभृतोअतंद्रिता खलमालिनीमुर्वरामास्मिन्कर्मण्युपह्वये ध्रुवाꣳ सामे त्वनपायिनी भूयात्स्वाहेति ॥ ९ ॥ स्थालीपाकस्य

जुहोति सीतायै यजायै समायै भूत्याइति ॥१० ॥ मंत्रवत्प्रदानमेकेषां ॥ ११ ॥ स्वाहाकारप्रदानाइति- श्रुतेर्विनिवृत्तिः ॥ १२ ॥ स्तरणशेषकुशेषु सीतागो- प्तृभ्योबलिꣳहरति पुरस्तात्ये तआसते सुधन्वानो- निषंगिणः तेत्वा पुरस्ताद्गोपायंत्वप्रमत्ताःअनपायि- नः नमएषां करोम्यहं बलिमेभ्योहरामीममिति ॥ १३ ॥ अथ दक्षिणतोऽनिमिषावर्मिणआसते तेत्वा दक्षिणतोगोपायन्त्वप्रमत्ताअनपायिनः नमएषां क- रोम्यहंबलिमेभ्योहरामीममिति ॥ १४ ॥ अथपश्चात् आभुवः प्रभुवोभूतिर्भूमिः पार्ष्णिः शुनंकुरिः ते त्वा पश्चाद्गोपायन्त्वप्रमत्ताअनपायिनः नमएषां करोम्यहंबलिमेभ्योहरामीममिति ॥ १५ ॥ अथो- त्तरतः भीमा वायुसमा जवे तेत्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ताअनपायिनः नमएषां करोम्यहं बलिमेभ्योहरामीममिति ॥ १६ ॥ प्रकृ- तादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म ॥ १७ ॥ स्त्रियश्चोपयजेरन्नाचरितत्वात् ॥ १८ ॥ सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेद्ब्राह्मणान्भोजयेत् ॥ १९ ॥ ॥ १७ ॥

इतिश्रीपारस्काराचार्यविरचिते गृह्यसूत्रे द्वितीयं काण्डं संपूर्णम् ॥

---

॥ **अथ सीतायज्ञः** ॥ अथेदानीं सीतायज्ञकर्म व्याख्यास्यतइति शेषः तत्र कृषिप्रवृत्तऔपासनिकोऽधिक्रियते ॥ **व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत्** ॥ तत्र सीतायज्ञे व्रीहयश्चयवाश्च व्रिहियवास्तन्मध्ये यत्र यत्र यस्मिन् यस्मिन् व्रीहिकाले यवकाले वा यजेत सीतायज्ञेन तन्मयं व्रीहिमयं व्रीहिकाले यवमयं यवकाले स्थालीपाकं चरुं श्रपयेत् ॥ **कामादीजानोन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत्** ॥ कामात् इच्छातः अन्यत्रापि यज्ञादिप्रभृतिषु ईजानोयागं कुर्वन् व्रीहियवयोरेव अन्यतरं स्थालीपाकꣳ श्रपयेत् ॥ **न पूर्वचोदित्वात्संदेहः** ॥ अत्र व्रीहियवयोरन्यतरस्य यागमात्रसाधनद्रव्यत्वेन संदेहः कुतः पूर्वचोदित्वात् पूर्वोपदिष्टत्वात् कुत्रेति चेत् व्रीहीन् यवान्वा हविषि इत्यत्र कल्पे अतोन संदेहः ॥ **असंभवाद्विनिवृत्तिः** ॥ ननु यावस्य चरोर्विनिवृत्तिर्दृश्यते कथमन्यतरं स्थालीपाकं श्रपयेदिति चेत् उच्यते यावस्य चरोर्या निवृत्तिः सा असंभवात् न शास्त्रात् अतोनायं असंभवविनिवृत्तस्य यावस्य चरोः प्रतिप्रसवः यतः सामान्यशास्त्रविहितं क्वचिच्छास्त्रान्तरेण प्रतिषिद्धंपुनर्विधीयमानं हि प्रतिप्रसवमुच्यते इदं त्वसंभवात्प्रतिषिद्धं कथमसंभवइति चेत् अनवस्रावितांतरोष्मपक्वे ईषदसिद्धे तंडुल पाके चरुशब्दप्रयोगप्रत्ययात् अतोवाचनिकोयावस्थालीपाको यत्र तत्र गुलिकाभिः संपाद्यते यत्र पुनर्विकल्पः तत्रासंभवाद्विनिवृत्तिरिति ॥ **क्षेत्रस्य पुरस्तादुत्तरतोवा शुचौ देशे कृष्टे फलानुपरोधेन** ॥ क्षेत्रस्य सस्यवतः पुरस्तात् पूर्वस्यां दिशि उत्तरतोवा उदीच्यां वा शुचौ अमेध्यद्रव्यरहिते देशे कृष्टे फालेन विलिखिते फलस्य सस्यस्य अनुपरोधः अबाधः फलानुपरोधेन सीतायज्ञः कर्त्तव्यः ॥ **ग्रामे चोभयसंप्रयोगात्** ॥ यद्वा ग्रामे कर्त्तव्यः कुतः उभयसंप्रयोगात् उभयं क्षेत्रं ग्रामश्च संप्रयोक्तुं अधिकरणतया संबद्धुं शक्यते फलानुपरोधेन

कृष्टत्वेन वा पुरस्तादुत्तरतोवा शुचौ देशे कृष्टे इति ग्रामस्यापि विशेषणत्वेन संबध्यते अविरोधात् ननु क्षेत्रग्रामयोः एकतरोपादानेन अन्यतरस्य बाधः प्रसज्येत ततोविरोध इतिचेत् न ॥ **अविरोधात्** ॥ न विरोधः अविरोधस्तस्मादविरोधाद्विकल्पादेकतरोपादानं न दोषः व्यवस्थासंभवे हि अष्टदोषदुष्टोपि विकल्पः आश्रीयते न्यायविद्भिः ॥ **यत्र श्रपयिष्यन्नुपलिप्तउद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रै-र्दर्भैस्तीर्त्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति** ॥ यत्र क्षेत्रे ग्रामे वा चरुं श्रपयिष्यन् भवति श्रपयितुमिच्छन् भवति तत्र उपलिप्ते गोमयोदकेन उद्धते स्फ्येनोल्लिखिते अवोक्षिते मणिकोदकेन सिक्ते अग्निमावसथ्यं स्थापयित्वा अत्र पुनरुपलेपनाद्युपदेशः दृष्टेऽपि प्राप्त्यर्थः न पुनः परिसमूहनोद्धरणनिवृत्त्यर्थः तन्मिश्रैर्दर्भैस्तीर्त्वा तैर्व्रीहिभि-र्यवैर्वा मिश्रामिलितादर्भास्तैस्तन्मिश्रैर्दर्भैः अग्निं स्तीर्त्वा परिस्तीर्य आज्यभागयागानंतरं वक्ष्यमाणमंत्रैः पृथिवीद्यौरित्यादिभिः पंचभिर्मंत्रैः क्रमेण पंचाज्याहुतीर्जुहोति ॥ **स्थालीपाकस्यजुहोति सीतायै जयायै शमायै भूत्यै इति** ॥ **मंत्रवत्प्रदानमेकेषां** ॥ स्थालीपाकस्य इत्यवयवलक्षणा तस्य सीताद्याभ्यश्चतृसृभ्योदेवताभ्यश्चतस्रआहुतीः क्रमेण तन्नामभिरेव चतुर्थ्यंतैः स्वाहाकारांतैश्च जुहोति एकेषामाचा-र्याणां मते मंत्रवदेवप्रधानं होमः न स्वाहाकारः किं कारणं आह ॥ **स्वाहाकारप्रदानाइतिश्रुतेः** ॥ स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः जुहोतयः इति श्रुतेः श्रुतौ श्रौतकर्मणि स्वाहाका-रप्रदानत्वं इदं तु स्मार्त्तं कर्म्म ननु वषट्कारेण च देवेभ्योन्नं प्रदीयतइति सामान्यवचनात् गार्ह्येऽपि प्रवर्त्ततामिति चेत् न चात्र वषट्कारस्य प्रवृत्तिः किमिति याज्यापुरोनुवाक्यावत्त्वे वषट्कारस्य प्रवृत्तिरिति याज्यापुरोनुवाक्यवत्त्वे वषट्कारस्य श्रवणात् तेन सह पाठाच्च स्वाहाकारोऽप्यत्र निवर्त्तते न ॥ **विनिवृत्तिः** ॥ मंत्रवत्प्रदानमि-

त्येतस्य पक्षस्य विनिवृत्तिः निरासः अप्रवृत्तिः कुतः स्मार्त्तेऽपि कर्मणि स्मृतिकारैः स्वाहाकारस्य विधानात् यथा छंदोगपरिशिष्टे कात्यायनः "स्वाहाकारवषट्कारनमस्कारादिवौकसां। हंतकारोमनुष्याणां स्वधाकारं स्वधाभुजामिति" अथ सीतायज्ञेचेत्यनेन सूत्रेणातिदिष्टाभ्योलांगलयोजनदेवताभ्यः तद्भूतोपात्तस्थालीपाकेनास्मिन्नवसरे जुहुयात् कुतः तत्स्थालीपाकहोमाधिकारात् ततः स्विष्टकृदादि ॥ **स्तरणाशेषकूर्चेषु सीतागोमृभ्योबलिᳲहरति पुरस्ताद्ये तआसतइत्यादि ॥** तत्र पुरस्ताद्यइत्यादिभिश्चतुर्भिर्मंत्रैस्तरणशेषभावउपसर्जनत्वं गताः प्राप्ताः तएव कुशास्तेषुस्तरणकुशेषु बलिं हरति केभ्यः सीतागोमृभ्यः सीतालांगलपद्धतीः गोपायंति पालयंति ये ते सीतागोप्तारस्तेभ्यः स्तरणशेषकूर्चाः प्राच्यादिषु चतसृषु दिक्षु यथालिंगं प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म प्राकृतात्प्रधानदेवतासंबंधिनोव्रीह्याद्यावाद्या स्थालीपाकात् अन्योयः सिद्धोपात्तश्चरुस्तस्मात्स्थालेनाज्यशेषेण च पूर्ववत् लांगलयोजनवत् बलिकर्म इंद्रपर्जन्यादिभ्योबलिहरणं कर्त्तव्यं स्त्रियश्चोपयजेरन्नाचरितत्वात् स्त्रियश्च भार्यादिकाः उपयजेरन् बलिकर्मणा ताभ्यएवदेवताभ्यः पूजां कुर्युःकुतएव तत् आचरितत्वात् प्राचीनाभिस्त्रीभिः बलिकर्मणः कृतत्वात् सᳲस्थिते कर्मणि ब्राह्मणान् भोजयेत् संस्थिते समाप्ते सीतायज्ञाख्ये कर्मणि ब्राह्मणान् विप्रान् त्रिप्रभृतीन् भोजयेत् आशयेद्भक्ष्यभोज्यादिभिः द्विरुक्तिरत्र कांडसमाप्तिनिबंधना ॥ इतिसूत्रार्थः ॥ अथ प्रयोगः ॥ अथ सीतायज्ञः कृषिं कुर्वतः साग्नेः व्रीहिनिष्पत्तिकाले यवनिष्पत्तिकाले च भवति. तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिके भवतः अनंतरं क्षेत्रस्य पूर्वतउत्तरतोवा कृष्टे शुचौ देशे यत्र सस्यानि न नश्यंति तत्रेदं कर्म कुर्यात् यद्वा ग्रामे पूर्वतउत्तरतोवा शुचिदेशस्य कर्षणं विधाय तत्र कर्त्तव्यं एवं देशद्वयान्यतरे देशे पंचभूसंस्कारान्

कृत्वा औपासनाग्निमुपसमाधाय ब्रह्मोपवेशनादि कुर्यात् तत्र विशेषः व्रीहिकाले व्रीहिसस्यमिश्रैर्दर्भैरग्निं परिस्तृणाति यवकाले यवसस्यमिश्रैः तथा व्रीहिकाले व्रीहिमयं एकमेव चरुं यवकाले यवमयं श्रपयति अपरं स्थालीपाके सिद्धमेवासादयति तंडुलानंतरं उपकल्पयति बलि-पटलकं बलिपटलकमिति शूर्पादिकं वैणवं पात्रं कल्माषौदनयुक्तमुच्यते तंडुलानंतरं सिद्धचरुं प्रोक्षति आज्यभागानंतरं पंचाहुतीर्जुहोति यथा पृथिवी द्यौः प्रदिशोदिशोयस्मै द्युभिरावृताः तमिहेंद्रमुपव्हये शिवानः संतु हेतयः स्वाहा इदमिंद्राय यन्मे किंचिदुपेप्सितमस्मिन् कर्मणि वृत्रहन् तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा इदमिंद्राय संपत्तिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा इदमिंद्राय यस्या-भावे वैदिकलौकिकानां भूतिर्भवति कर्मणां इंद्रपत्नीमुपव्हये सीताꣳ-सामेऽस्त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा इदमिंद्रपत्न्यै अ-श्वावती गोमती सूनृतावतीविभर्ति या प्राणभृतोअतंद्रिता खमलमालिनी मुर्वरामस्मिन् कर्मण्युपव्हये ध्रुवाꣳ सामेऽस्त्वनपायिनी भूयात्स्वाहा ॥ इदं सीतायै अथ प्रकृतस्य स्थालीपाकस्य चतस्रआहुतीर्जुहोति यथा सीतायै स्वाहा इदं सीतायै यजायै स्वाहा इदं यजायै शमायै स्वाहा इदं शमायै भूत्यै स्वाहा इदं भूत्यै अथ सिद्धेन स्थालीपाकेन लांग-लयोजनदेवताभ्योअष्टाहुतीर्जुहोति तद्यथा इंद्राय स्वाहा इदमिंद्राय पर्जन्याय स्वाहा इदं पर्जन्याय अश्विभ्याꣳ स्वाहा इदमश्विभ्यां मरुद्भ्य स्वाहा इदं मरुद्भ्यः उदलाकाश्यपाय स्वाहा इदमुदलाकाश्यपाय स्वातिकायै स्वाहा इदं स्वातिकायै सीतायै स्वाहा इदं सीतायै अनु-मत्यै स्वाहा इदमनुमत्यै यथादैवतं त्यागः प्रकृतात्सिद्धान्नचरोः स्विष्टकृतः ततोमहाव्याहृत्यादि ब्रह्मणे दक्षिणादानांतं कृत्वा क्षेत्रस्य पुरस्तादारभ्य प्रादक्षिण्येन प्रतिदिशं स्तरणशेषकुशतृणान्यास्तीर्य तेषु मुख्येन चरुणा यथास्तरणं वक्ष्यमाणमंत्रैर्बलीन् हरति यथापुर-

स्ताद्यएतआसते सुधन्वा निषंगिणः ते त्वा पुरस्ताद्गोपायंत्वप्रमत्ताअनपायिनी नमः एषां करोम्यहं बलिमेभ्योहरामीमं इति पुरस्ताद्बलिहरणमंत्रः इदं सुधन्वभ्योनिषंगिभ्यः अथ दक्षिणतोनिमिषावर्मिणआसते ते त्वा दक्षिणतोगोपायंत्वप्रमत्ताअनपायिनोनमएषां करोम्यहं बलिमेभ्योहरामीमिं इति दक्षिणतो बलिहरणमंत्रः इदमनिमिषेभ्योवर्मिभ्यः अथ पश्चाद् भुवः प्रभुवोभूतिर्भूमिः पार्ष्णिः शुनंकुरिः ते त्वा पश्चाद् गोपायंत्वप्रमत्ताअनपायिनी नमएषां करोम्यहं बलिमेभ्यो हरामीमंमिति पश्चिमतोबलिहरणमंत्रः इदमाभूभ्योभूत्यै भूम्यै पार्ष्ण्यै शुनंकर्यै अथोत्तारतोभीमा वायुः समाजवोति त्वोत्तरतः क्षेत्रश्चले गृहेऽध्वनि गोपायंत्वप्रमत्ताअनपायिनोनमएषां करोम्यहं बलिमेभ्योहरामीमं इति उत्तरतोबलिहरणमंत्रः इदं भीमेभ्योवायुसमाजवेभ्यः अथ सिद्धचरुशेषं स्थालीनाज्यशेषेण सन्नीयते नैंद्रादिभ्योऽनुमत्यंतेभ्योलांगलयोजनदेवताभ्यो बलिहरति ततो बलिपटलकेन स्त्रियश्चेंद्रादिभ्योहलयोजनदेवताभ्यः अन्येभ्यश्च वृद्धव्यवहारसिद्धेभ्यः क्षेत्रपालादिभ्यः बलिदानं कुर्युः ततोब्राह्मणान्भोजयेत् ॥ इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां प्रयोगपद्धतौ द्वितीयः कांडः समाप्तः ॥

**अनाहिताग्नेर्नवप्राशनं ॥ १ ॥ नवꣳस्थालीपाकꣳश्रपयित्वाज्यभागाविष्ट्वाज्याहुती जुहोति शतायुधाय शतवीर्याय शतोतयेअभिमातिषाहे शतं योनः शरदोजीजानिन्द्रोनेषदति दुरितानि विश्वा स्वाहा ये चत्वारः पथयोदेवयानाअंतरा द्यावापृथिवीवियंति तेषां योऽज्यानिमजीतिमावहात्तस्मै नोदेवाःपरिधत्तेह सर्व्वे स्वाहेति ॥ २ ॥**

स्थालीपाकस्याग्रयणदेवताभ्योहुत्वाजुहोति स्विष्टकृतेच स्विष्टमग्नेअभितत्पृणीहि विश्वाश्च देवः पृतनाअभिष्यक् सुगन्नुपंथांप्रदिशन्नएहिज्योतिष्मद्धेह्यजरन्नआयुः स्वाहेति ॥ ३ ॥ अथ प्राश्नाति अग्निः प्रथमः प्राश्नातु सहि वेद यथा हविः शिवा अस्मभ्यमोषधीःकृणोतु विश्वचर्षणिः भद्रान्नःश्रेयः समनैष्टदेवास्त्वयावसेन समशीमहि त्वा सनोमयोभूःपितवाऽविशस्वशं तोकाय तनुवे स्योनः॥ ४ ॥ अन्नपतीयया वा ॥ ५ ॥ अथ यवानां एतमुत्यं मधुना संयुतं यवꣳसरस्वत्याअधिमनावचर्कृषुः इन्द्रआसीत्सीरपतिः शतक्रतुः कीनाशाऽआसन्मरुतः सुदानवइति ॥ ६ ॥ ततोब्राह्मणभोजनम् ॥ ७ ॥ १ ॥

॥ **अनाहिताग्नेर्नवप्राशनम्** ॥ अनाहिताग्निरावसथिकः तस्य नवान्नप्राशननिमित्तं नवप्राशनाख्यं कर्म व्याख्यास्यत इति सूत्रार्थः नवप्राशनमिति संज्ञात्वन्वर्था ततश्चैतत्कृत्वा नवं प्राश्यते ना कृत्वा अत्र किं नवमात्रं निषिध्यते उत कतिपयानि इत्यपेक्षिते गृह्यसंग्रहकारः "नव यज्ञाधिकारस्थाः श्यामाका व्रीहयो यवाः । नाश्नीयात्तानहुत्वैवमन्येष्वनियमः स्मृतः ॥ ऐक्षवः सर्वशुंगाश्च नीवाराश्चणकास्तिलाः । अकृत्वाग्रयणेऽश्नीयात्तेषां नोक्ता हविर्गुणाः "॥ इति नवस्याग्रयणशब्दवाच्यता तेन पौर्णमासस्यामावास्यानियमो नास्ति व्रीहियवपाकोचितत्वात् शरद्वसंतावाद्रियेते ॥ **नवꣳ स्थालीपाकꣳ**

**श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति शतायुधाय ॥** इत्यादि नवं शरदि नवं व्रीहिमयं वसंते नूतनयवमयं स्थालीपाकं चरुं त्यक्त्वाज्यभागयोरंते शतायुधायेति चत्वार इत्येताभ्यां प्रतिमंत्रं द्वे आज्याहुती जुहोति । **स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्न** ॥ इति अथ स्थालीपाकस्य आग्रयणदेवताभ्य इंद्राग्नी विश्वेदेवा द्यावापृथिवी इत्येताभ्यः प्रत्येकमेकैकामाहुतिं हुत्वा स्विष्टमग्न इत्यनेन मंत्रेण स्विष्टकृद्धोमात्पूर्वं चकारात्पश्चाच्चाज्याहुतिं जुहोति मध्ये स्थालीपाकेन सौविष्टकृतं ॥ **अथ प्राश्नात्यग्निः प्रथम** ॥ इति ततो महाव्याहृत्यादिप्राजापत्यांते अग्निः प्रथम इति मंत्रेण संस्रवं प्राश्नाति अत्र हुतशेषप्राशने गुणविधिरवमंत्रेण ॥ **अन्नपतीयया वा** ॥ अन्नपतिर्ह्यग्निर्देवता यस्याः सा अन्नपतीया ऋक तया अन्नपतीयया ऋचा अन्नपतेन्नस्येत्यादिकया विकल्पेन प्राश्नाति यद्वा अन्नपतिशब्दो यस्यामृचि अस्ति सान्नपतीया ॥ **अथ यवानामेतमुत्य** ॥ मिति अथव्रीहिप्राशनमंत्राभिधानानंतरं यवानां प्राशने मंत्रमाह एतमुत्यमित्यादि सुदानव इत्यंतं मंत्रं यवप्राशने पैठीनसिः अग्निमेवोपासीत नान्यदैवतं अग्निर्भूम्यामिति विज्ञायते न प्रवसेत् यदि प्रवसेद्गुत्यमुपस्थानं यजमानस्य प्राशितमग्नौ जुहुयात् नवेष्ट्यामेवोपासनिकस्य ततो ब्राह्मणभोजनम् ॥ इति सूत्रार्थः ॥ अथ प्रयोगः ॥ तत्र शरदि वसंते च अनाहिताग्नेः नवप्राशनं कर्म भवति प्रथमप्रयोगे मातृकापूजाभ्युदयिके विदध्यात् आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनांते विशेषः नवं स्थालीपाकं श्रपयित्वाज्यभागानंतरं आज्याहुतिद्वयं जुहोति यथा शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे शतंयोनः शरदोजीजानिन्द्रोनेषदति दुरितानि विश्वा स्वाहा इदमिंद्राय ये चत्वारः पथयो देवयाना अंतरा द्यावापृथिवी वियंति तेषां योज्यानिमजीजिमावहा तस्मै नो देवा परिदत्ते ह सर्वे

स्वाहाइदर्ठ सर्वेभ्यो देवेभ्यः इंद्राग्नी विश्वेदेवा द्यावापृथिवी स्थालीपाके- नाग्रयणदेवताः इंद्राग्निभ्यार्ठ स्वाहा इदमिंद्राग्निभ्यां उपांशु विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यः उपांशु द्यावापृथिवीभ्यार्ठ स्वाहा इदं द्यावापृथिवीभ्यां इति तिस्र आहुतीर्हुत्वा स्विष्टमग्ने अभितत् पृणीहि विश्वांश्च देवः पृतना अभिष्यक् सुगन्नु पंथां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरं न आयुः स्वाहेत्यनेन मंत्रेण आज्याहुतिं जुहोति इदमग्नये ततः स्थालीपाकत् अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते हुत्वा पुनः स्विष्टमग्न इत्यादिनाज्याहुतिं जुहोति इदमग्न इति त्यागः ततो महाव्याहृत्यादि प्राजापत्यहोमांते कृत्वा अग्निः प्रथमः प्राश्नातु सहि वेष यथा हविः शिवा अस्मभ्य ओषधीः कृणोतु विश्वचर्षणिः भद्रां न श्रेयः समनैष्ट देवाः त्वया वशेन समशीमहित्वा स नो मयो भूः पितो आविशस्व शंतोकाय तन्वै स्योने इत्यनेन मंत्रेण संस्रवं प्राश्नाति अन्नपतेन्नस्य नो देहीत्यनयर्चा वा प्राश्नाति यवान्नप्राशने तु एतमुत्य मधुना संयुतं यव र्ठ सरस्वत्याऽअधिवनाय चकृषुः इंद्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानव इत्यनेन यवसंस्रवं प्राश्नाति ततो ब्राह्मणभोजनम् ॥

**मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म ॥ १ ॥ स्थालीपाकर्ठ श्रपयित्वा श्रवणावदाज्याहुती हुत्वा पराजुहोति यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीं संवत्सरस्य या पत्नी सा नोअस्तु सुमंगली स्वाहा ॥ संवत्सरस्य प्रतिमा यातार्ठ रात्रिमुपास्महे प्रजार्ठ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा । संवत्सराय परिवत्सरायेडावत्सरायेद्वत्स-**

राय वत्सराय कृणुता बृहन्नमः। तेषांव्वयर्ठ सुमतौ यज्ञियानां ज्योगजीताअहताःस्याम स्वाहा ग्रीष्मो-हेमंतउतनोवसंतः शिवावर्षाअभया शरन्नः तेषामृ-तूना ठ शतशारदानां निवातएषामभये वसेम स्वाहेति ॥ २ ॥ स्थालीपाकस्य जुहोति सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमंताय चेति ॥ ॥ ३ ॥ प्राशनांते सक्तुशेषर्ठ शूर्पेन्युप्योपनिष्क्रमण-प्रभृत्या मार्जनात् ॥ ४ ॥ मार्जनांतउत्सृष्टोबलि-रित्याह ॥ ५ ॥ पश्चादग्नेः स्त्रस्तरमास्तीर्याहतं च वासआल्पुताअहतवाससः प्रत्यवरोहंति दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः ॥ ६ ॥ दक्षि-णतोब्रह्माणमुपवेश्योत्तरतउदपात्रर्ठ शमीशाखासी-तालोष्ठाश्मनोनिधायाग्निमीक्षमाणोजपति । अयम-ग्निर्व्वीरतमोयं भगवत्तमः सहस्रसातमः ॥ सुवीर्यो-यार्ठ श्रैष्ठ्यैदधातुनाविति ॥ ७ ॥ पश्चादग्नेः प्रांचमं-जलिं करोति ॥ ८ ॥ दैवीं नावमिति तिसृभिः स्त्रस्तरमारोहंति ॥ ९ ॥ ब्रह्माणमामंत्रयतेब्रह्मन्प्र-त्यवरोहामेति ॥ १० ॥ ब्रह्मानुज्ञाताः प्रत्यवरोहंति आयुः कीर्त्तिर्यशोबलमन्नाद्यं प्रजामिति ॥ ११ ॥ उपेताजपंति सुहेमंतः सुवसंतः सुग्रीष्मः प्रतिधी-

यतान्नः ॥ शिवानोवर्षाः संतु शरदः संतु नः शिवाइति ॥ १२ ॥ स्योनापृथिवीनोभवेतिदक्षिणपार्श्वैप्राक्शिरसः संविशंति ॥ १३ ॥ उपोत्तिष्ठंति उदायुषा स्वायुषोत्पर्जन्यस्य वृष्टया पृथिव्याः सप्तधामभिरिति॥ १४ ॥ एवं द्विरपरं ब्रह्मानुज्ञाताः ॥ १५ ॥ अधः शयीरंश्चतुरो मासान्यथेष्टं वा ॥ ॥ १६ ॥ २ ॥

॥ मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म ॥ मार्गशीर्ष्यां आग्रहायण्यां पौर्णिमायां आग्रहायणीसंज्ञं कर्म भवति ॥ स्थालीपाकं श्रपयित्वा श्रवणावदाज्याहुती हुत्वा पराजुहोति यां जना ॥ इत्यादि तत्र चरुं श्रपयित्वा श्रवणाकर्मणि यथा द्वे आहुती जुहोति तथात्र अपश्वेतपदाजहीति द्वाभ्यां मंत्राभ्यां हुत्वा ततोनंतरमपराः यां जना इत्यादिभिश्चतुर्भिर्मंत्रैः स्वाहांतैश्चतस्र आज्याहुतीर्जुहोति ॥ स्थालीपाकस्य जुहोति सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमंताय चेति ॥ ततः स्थालीपाकेन सोमायेत्यादिभिश्चतुर्भिर्मंत्रैः स्वाहांतैश्चतस्र आज्याहुतीर्जुहोतीति चकारः समुच्चयार्थः ॥ प्राशनांते सक्तुशेषं शूर्पेण्युप्योपनिष्क्रमणप्रभृत्या मार्जनात् ॥ ततः स्विष्टकृतप्रभृति प्राशनांते बलिहरणार्थं सक्तुशेषं शूर्पे कृत्वा उपनिष्क्रमणप्रभृति शालाया बहिर्निष्क्रमणादि आमार्जनात् द्वारदेशे मार्जनं यावत् श्रवणाकर्मवत्कुर्यात् ॥ मार्जनांत उत्सृष्टो बलिरित्याह ॥ मार्जनस्यांते अवसाने उत्सृष्टो बलिरिति वचनं ब्रूयात् । एतावदाग्रहायणीकर्म । अथान्यत्कर्माभिधीयते ॥ पश्चादग्नेः स्रस्तरमास्तीर्याहतं च वास आस्तुता अहतवाससः प्रत्यवरोहंति ॥ पश्चादग्नेः आवसथ्यस्य पश्चिमदेशे स्रस्तरं प्रागग्रैः कुशैः

स्वस्तरं आस्तीर्य विरचय्यतच्चास्तरमग्निशालातो गृहांतरे युज्यते अग्निशालाया ह्यौपसथ्यरात्रिमंतरेण शयनप्रतिषेधात् अहतं च वसनं सकृत् प्रक्षालितं वस्त्रं तदुपरि आस्तीर्येति संबंधः आप्लुताः स्नाताः अहते नवे सदशे सकृत् प्रक्षालिते प्रत्येकं वाससी येषां ते अहतवाससः स्वामिप्रभृतयः प्रत्यवरोहंति स्वस्तरं निविशंते **दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः** कथं प्रत्यवरोहंति सर्वेषां दक्षिणतः स्वामी गृहपतिर्भवति तस्योत्तरा जाया पत्नी तस्या उत्तरतः अपत्यानि इति शेषः कथं यथाकनिष्ठं यो यस्मात् कनिष्ठः स तस्मादुत्तरतः तस्मादपि यः स तदुत्तरत इति ॥ **दक्षिणतो ब्रह्माणमुवेश्योत्तरत उदपात्रं शमी शाखा सीता लोष्ठाश्मनो निधायाग्निमीक्षमाणो जपत्यग्निर्वीरतम** ॥ इति तत्र स्वामी स्वस्तरं प्रत्यवरोक्षन् दक्षिणतोग्नेः ब्रह्माणं यथाविधि उपवेश्य उत्तरत उदपात्रं जलपूर्णं भाजनं शमीवृक्षस्य शाखां सीता लोष्ठं हलपद्धतिभवं मृच्छकलं अश्मानं प्रस्तरं निधाय स्थापयित्वा अग्निमीक्षमाणः आवसथ्यं पश्यन् ॥ **अयमाग्निर्वीरतमोयं भगवत्तमः सहस्रसातमः सुवीर्योयं श्रेष्ठ्यै दधातु नावि** ॥ त्येतं मंत्रं जपति ॥ **पश्चादग्नेः प्रांचमंजलिं करोति दैवीं नावमिति तिसृभिः** ॥ अग्नेः पश्चिमतः स्थित्वा प्रागग्रमंजलिं करसंपुटं विदधाति दैवीं नावमित्यारभ्य मध्वारजाऽसि सुक्रतू इत्यंताभिस्तिसृभिर्ऋग्भिः **स्वस्तरमारोहंति ब्रह्माणमामंत्रयते ब्रह्मन् प्रत्यवरोहामेति** स्वस्तरं यथोक्तं आरोहंति इदानीं स्वामिप्रभृतयः पूर्वं यत्प्रत्यवरोहंतीति तद्विधानार्थं तत्र स्वामी ब्रह्माणं आमंत्रयते पृच्छति कथं ब्रह्मन् प्रत्यवरोहामेति वाक्येन ॥ **ब्रह्मानुज्ञाताः प्रत्यवरोहंत्यायुः कीर्त्तिर्यशोबलमन्नाद्यं प्रजामिति** ॥ प्रत्यवरोहध्वमिति वाक्येन ब्रह्मणानुज्ञाताः प्रसूताः प्रत्यवरोहंति स्वस्तरमभितिष्ठंति आयुः कीर्तिमित्यनेन मंत्रेण अत्रस्त्रीणामपि मंत्रपाठः **उपेता जपंति सुहेमंतः सुवसंत** इत्यादिकं

तत्र ये उपेताः उपनीतास्ते जपंति सुहेमंत इत्यादिकं मंत्रं **स्योना पृथिवी नो भवेति** दक्षिणपार्श्वे प्राक्शिरसः संविशंति स्वस्तरमारुह्य स्योना पृथिवीत्यनेन मंत्रेण स्वामिजायापत्यानि प्राक् पूर्वं शिरो येषांते प्राक्शिरसः दक्षिणपार्श्वे उदङ्मुखाः संविशंति स्वपंति शेरते स्वस्तरोपरि इत्यर्थः **उपोत्तिष्ठंत्युदायुषा स्वायुषोत्पर्जन्यस्य पृथिव्याः सप्त धामभिरिति** उप स्वस्तरसमीपे उदतिष्ठंति उत्थाय तिष्ठंति उपपदमनर्थकं उदायुषा स्वायुषेत्यनेन मंत्रेण स्वस्तरात् एवं द्विरपरं ब्रह्मानुज्ञाताः एवमुक्तेन प्रकारेण ब्रह्मन् प्रत्यवरोहामेत्यारभ्य उत्थानपर्यंतं ब्रह्मानुज्ञाताः संतो द्विवारं अपरं अन्यत्स्वस्तरमारोहंति संविशंति उत्तिष्ठंतिच **अधः शयीरश्चतुरो मासान्यथेष्टं वा** अत ऊर्ध्वं चतुरो मासान् पौषमाघफाल्गुनचैत्रान् अधः खट्वां व्युदस्य भूमौ शयीरन् गृहपतिप्रमुखाः यथेष्टं वा अथवा इष्टमनतिक्रम्य यथेष्टं यथाकामं अधो वा खट्वायां वा शयीरन्निति विकल्पार्थः ॥ इति सूत्रार्थः ॥ अथ प्रयोगः ॥ मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म भवति तत्र प्रथमारंभेमातृपूजाभ्युदयिकं विधाय आवसथ्याग्नौ ब्रह्मोपवेशनादि प्राशनांते विशेषः शूर्पं सक्तून् उल्कां उदपात्रं दर्वीं कंकतत्रयमंजनमनुलेपनं स्रजश्चेत्युपकल्प्य आज्यभागानंतरं अपश्वेतपदाजहीत्याहुतिद्वयं श्रवणाकर्मवद्धुत्वा अपराश्चतस्रआज्याहुतीर्जुहोति वक्ष्यमाणैश्चतुर्भिर्मंत्रैः प्रतिमंत्रं यथा यां जनाः प्रतिनंदंति रात्रीं धेनुमिवायतीं संवत्सरस्य या पत्नी सा नोअस्तु सुमंली स्वाहा इदर्ठ॰रात्र्यै संवत्सरस्य प्रतिमायातार्ठ॰रात्रीमुपास्महे प्रजार्ठ॰मुर्वीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा इदर्ठ॰रात्र्यै संवत्सराय परिवत्सरायेडावत्सरायेद्वत्सराय वत्सरायकृणुते बृहत्तमः तेषां चर्यासुमतौ यज्ञियानां जोग्जीताअहतास्याम स्वाहा इदर्ठ॰संवत्सराय परिवत्सरायेडावत्सरायेद्वत्सराय वत्सराय च ग्रीष्मो-

हेमंतउत्तरोवसंतः शिवावर्षाअभयाशरन्नः तेषां वयर्ठ सुमतौ यज्ञियानां निवातएषामभये वसेम स्वाहा इदं ग्रीष्माय हेमंताय वसंताय वर्षाभ्यः शरदे च ततः स्थालीपाकेन चतस्रआहुतीर्जुहोति तद्यथा सोमाय स्वाहा इदं सोमाय मृगशिरसे स्वाहा इदं मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै स्वाहा इदं मार्गशीर्ष्यै पौर्णमास्यै हेमंताय स्वाहा इदं हेमंताय ततः स्थालीपाकेन सौविष्टकृतं हुत्वा महाव्याहृत्यादक्षिणादानांते सक्तुशेषं शूर्पेन्युप्योपनिष्क्रमणप्रभृति आमार्जनांतं श्रवणाकर्म्मवत्कृत्वा मार्जनांते उत्सृष्टोबलिरित्युच्चैर्ब्रूयात् ततस्तां रात्रिं वत्सान् स्वमातृभिस्सह ससृंजेत् इत्याग्रहायणीकर्म ॥ अथ स्रस्तरारोहणं ॥ तत्र प्रथमप्रयोगे मातृपूजाऽभ्युदयिके विधाय स्रस्तरास्तरणप्रदेशगृहे सर्वमावसथ्याग्निं नीत्वा पंचभूसंस्कार पूर्वकं स्थापयित्वा अग्नेः पश्चिमायां दिशि कुशैः स्रस्तरास्तरणं कुर्यात् स्रस्तरस्य स्तरणं अग्निशालायागृहांतरे युज्यते अग्निशालायामौपवसथ्यरात्रिमंतरेण शयननिषेधात् तस्योपरि नूतनं सकृत्प्रक्षालितं उदकूदशं वासः संस्तरेत् अग्निं दक्षिणेन ब्रह्माणमुपवेश्य उत्तरतउदपात्रं शमीशाखा सीतालोष्टं अश्मानं च विधाय स्रस्तरपश्चिमतः स्वामी स्थित्वा तमुत्तरेण पत्नी तामुत्तरेणापत्यानि यथाकनिष्ठं तत्र गृहपतिरग्निमीक्षमाणोजपति अयमग्निर्वीरतमोयं भगवत्तमः सहस्रसातमः सुवीर्योऽयर्ठ श्रैष्ठ्येदधातु नौ इत्येतं मंत्रं ततः पश्चादग्नेः प्राङ्मंजलिं करोति दैवीन्नावर्ठ स्वरित्रामनागसं इत्यादिभिर्स्र्रंध्वा रजार्ठ सि सक्रतू इत्यंताभिर्ऋग्भिः ततोब्रह्मन् प्रत्यवरोहामेति ब्रह्माणमामंत्र्य प्रत्यवरोहतेमिति ब्राह्मणाः प्रत्यनुज्ञाताः सर्वे स्नाताः अहतवाससः आयुः कीर्त्तिर्यशोबलमन्नाद्यप्रजामित्यनेन मंत्रेण स्रस्तरमारोहंत्यधितिष्ठंति स्त्रियोऽपि मंत्रेण तमारुह्य तेषु ये उपनीता स्ते सुहेमंतः सुवसंतः सुग्रीष्मः प्रतिधीयतां नः शिवानोवर्षा दक्षिणपार्श्वे प्राक्शिरसः संविशंति स्वपंति ततउदायुषा स्वायुषो-

त्पर्जन्यस्य वृष्ट्या पृथिव्या सप्तधामभिरित्यनेन मंत्रेणोत्तिष्ठंति सर्व्वे ततः स्वस्तरादुत्तीर्य ब्रह्मानुमंत्रणप्रत्यवरोहणोपेतजपसंवेशनोत्थानानि वारद्वयमेवं कुर्युः ततआरभ्य चतुरोमासान् सर्वे अधः शयीरन् कामतोवा शय्यायां पुनरावसथ्यं पंचभूसंस्कारपूर्वकं स्वस्थाने स्थापयेत् इति स्वस्तरारोहणं ॥ " मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते। गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशोभवेत् ॥ आसायमाहुतेः कालात्कालोस्ति प्रातराहुतेः । प्रातराहुतिकालात्प्राक्कालः स्यात्सायमाहुतेः ॥ पौर्णमासस्यकालोस्ति पुरा दर्शस्य कालतः। पौर्णमासस्य कालात्प्राग्दर्शकालोपि विद्यते । वैश्वदेवस्य कालोस्ति प्राक् प्रघासविधानतः॥ प्रघासानां च कालः स्यात्साकमेधीयकालतः। स्यात्साकमेधकालोप्याशुनासीरीयकालतः ॥शुनासीरीयकालोपि आवैश्वदेवकालतः। श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः॥ प्राग्यष्टुं युज्यतेऽवश्यं न त्वत्राग्रयणात्परः । दक्षिणायनकाले वा पश्विज्या वोत्तरायणे ॥अन्योन्यकालतः पूर्वं यष्टुं युक्ते उभे अपि । एवमागामियागीयमुख्यकालादधस्तनः ॥ स्वकालादुत्तरोगौणः कालः पूर्वस्य कर्मणः । यद्वागामिक्रियामुख्य कालस्याप्यंतरालवत् ॥गौणकालत्वमिच्छंति केचित्प्राक्तनकर्मणि । गौणेष्वेतेषु कालेषुकर्म चोदितमाचरेत् ॥ प्रायश्चित्तप्रकरणे प्रोक्तां निष्कृतिमाचरेत् । प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ॥ नित्येष्टिमग्निहोत्रं च भारद्वाजीयभाष्यतः । मुख्यकाले हि मुख्यं चेत्साधनं नैव लभ्यते ॥ तत्कालद्रव्ययोगस्य मुख्यत्वं गौणतापि वा । मुख्यकालमुपाश्रित्य गौणकालप्रतीक्षणं ॥ एकपक्षगतोयावान् होमसाध्योविपद्यते । पक्षहोमविधानात्तं हुत्वा तंतुमतीं यजेत् " ॥

**ऊर्ध्वमाग्रहायण्यास्तिस्रोष्टकाः ॥ १ ॥ ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति ॥ २ ॥ अपूपमांठ-**

सशाकैर्यथासंख्यं ॥ ३ ॥ प्रथमाष्टकापक्षाष्टम्याम् ॥ ॥ ४ ॥ स्थालीपाकꣳ श्रपयित्वाज्यभागाविष्ट्वाज्याज्याहुतीर्जुहोति त्रिꣳशत्स्वसारउपयंति निष्कृतिꣳसमानं केतुं प्रतिमुंचमानाः ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्ये छंदसः परियंति भास्वतीः स्वाहा ज्योतिष्मतीः प्रतिमुंचते नभोरात्रीदेवीसूर्यस्य व्रतानि विपश्यंति पशवोजायमानानानारूपामातुरस्याउपस्थे स्वाहा एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रं ॥ तेन दस्यून्व्यसहंत देवाहंताऽसुराणामभवच्छचीभिः स्वाहा ॥ अनानुजामनुजां मामकर्त्त सत्यं वदंत्यन्विच्छ एतत् ॥ भूयासमस्य सुमतौ यथा यूयमन्यावोऽन्यामति माप्रयुक्त स्वाहा अभून्मम सुमतौ विश्ववेदाआष्टप्रतिष्ठामविदद्धिगाधम् , भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामतिमा प्रयुक्त स्वाहा पंचव्युष्टीरनुपंचदोहागां पंचनाम्नीमृतवोऽनुपंच , पंच दिशः पंचदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा ॥ ऋतस्य गर्भः प्रथमाव्यूषुष्युपामेका महिमानं बिभर्त्ति ॥ सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका

सवितैकान्नियच्छतु स्वाहा ॥ या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे ॥ सा नः पयस्वती धुक्षोत्तरामुत्तरार्ठ समार्ठ स्वाहा ॥ शुक्रऋषभानभसा ज्योतिषा गाद्विश्वरूपा शबलीरग्निकेतुः समानमर्थर्ठस्वपश्यमाना बिभ्रती जरामजरऽउषआगाः स्वाहा । ऋतूनां पत्नी प्रथमे यमागादह्नां नेत्री जनित्री प्रजानां एका सती बहुधोषो व्युच्छस्य जीर्णा त्वं जरयसि सर्वमन्यत्स्वाहेति ॥ ५ ॥ स्थालीपाकस्य जुहोति शांता पृथिवी शिवमंतरिक्षर्ठ शन्नोद्यौरभयं कृणोतु शन्नोदिशः प्रदिशआदिशोनोहोरात्रेकृणुतंदीर्घमायुर्व्यश्नवैस्वाहा आपोमरीचीः परिपांतु सर्वतोधातासमुद्रोऽअपहंतु पापं भूतंभविष्यदकृताद्विश्वमस्तुमे ब्रह्माभिगुप्तः सुरक्षितःस्यार्ठ स्वाहा । विश्वे आदित्यावसवश्चदेवारुद्रागोप्तारोमरुतश्च संतु ॥ ऊर्जं प्रजाममृतंदीर्घमायुःप्रजापतिर्मयिपरमेष्ठी दधातु नः स्वाहेति ॥ ६ ॥ अष्टकायै स्वाहेतिच ॥ ७ ॥ मध्यमागवा ॥८॥ तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्यऽइति ॥ ९ ॥ श्वोन्वष्टकासु सर्व्वासां पार्श्वसक्थिसव्याभ्यां परिवृत्ते पिंडपितृयज्ञवत् ॥ १० ॥ स्त्रीभ्यश्चोपसेचनं चकर्षु सुरया तर्पणेन चांजना-

**नुलेपनꣳ स्रजश्च ॥ ११ ॥ आचार्यायांतेवासिभ्यश्चानपत्येभ्यइच्छन् ॥ १२ ॥ माघ्याꣳवर्षे च तुरीया शाकाष्टका ॥ १३ ॥ ३ ॥**

॥ **ऊर्द्धमाग्रहायण्यास्तिस्रोष्टकाः** ॥ ऊर्द्धमुपरि आग्रहायण्याः मार्गशीर्ष्याः पूर्णिमायाः तिस्रः अष्टकाः त्रीण्यष्टकानि कर्माणि भवंति तानि च सकृत् संस्कारकर्मत्वात् कुतः संस्कारकर्मतेति चेत् सुमंतुगोतमादिभिः अष्टकाः पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति पाकयज्ञसंस्थाइत्यादिना अष्टकादीनां संस्कारत्वेन स्मरणात् ननु संस्कारकर्मणामपि पंचमहायज्ञपार्वणस्थालीपाकपार्वणश्राद्धानां कुतोऽसकृत्करणमभ्यासश्रवणात् तथा हि अहरहः स्वाहा कुर्यादाकाष्टादित्यादिना पंचमहायज्ञादीनां पक्षादिष्विति बहुवचनात् स्थालीपाकस्य वोशनमिति श्राद्धस्य न तथाष्टकानामभ्यासः श्रूयते येन ताः पुनः पुनरनुष्ठीयेरन् एवं च सति चत्वारिंशत्संस्कारकर्मणां मध्ये येषां अभ्यासः श्रूयते तान्यसकृद्भवंति इतराणि सकृदिति निर्णयः॥ **ऐंद्री वैश्वदेवी प्राजापत्या पित्र्येसपूपमाꣳसशाकैर्यथासंख्यं** ॥एवं अष्टकाकर्माणि कर्त्तव्यत्वेन विधाय तत्र द्रव्यदेवतापेक्षायांद्रव्याणिदेवताश्चाभिधत्ते तत्र प्रथमा ऐंद्री इंद्रोदेवतायस्याइति ऐंद्री इद्रदैवत्येत्यर्थः द्वितीया वैश्वदेवी विश्वेदेदेवादेवताअस्याइति वैश्वदेवी विश्वेदेवदैवत्येत्यर्थः तृतीया प्राजापत्या प्रजापतिर्देवताअस्याइति प्राजापत्या प्रजापतिदैवत्येति यावत् चतुर्थी पित्र्या पितरोदेवताअस्याइति पित्र्या पितृदैवत्येत्यर्थः अपूपं च मांसंच शाकश्च अपूपमांसशाकाः तैः अपूपमांसशाकैः यथासंख्यं यायस्याः यथासंख्या तामनक्रिम्य यथासंख्यं यजेतेत्यध्याहारः एतदुक्तं भवति प्रथमायां अपूपेन इंद्रं यजेत् द्वितीयायां मध्यमागवेति वक्ष्यमाणत्वात् गोमांसेन विश्वान्

देवान् तृतीयायां शाकेन प्रजापतिमिति अत्र तिस्त्रउपक्रम्य पित्र्येत्य-
नेन चतुर्थ्या अभिधानं अयुक्तमिति चेत् न उपक्रांतानां तिसृणां देवता-
ऽभिधानावसरे चतुर्थ्याअपि देवतायाआचार्यस्य बुद्धिस्थत्वात् तदभि-
धानं न दोषः अत्राष्टकाशब्दः कर्मवचनोपि कालोपलक्षकःयथावार्त्रघ्नी
पौर्णमासी वृधन्वंतीअमावास्येत्यत्र कर्माभिधायकौ पौर्णमास्यमावास्या
शब्दौ कालस्याप्युपलक्षकौ अन्यथा आग्रहायण्या ऊर्ध्वं तिस्रोष्टका-
इत्यनेन प्रतिपद्येवाष्टकाकर्मप्राप्तिः स्यात् तस्मादष्टकाशब्देन अष्ट-
म्युपलक्ष्यते तथा च श्रुतिः द्वादशपौर्णमास्याद्वादशाष्टकाद्वादशा-
मावास्याइति आश्वलायनस्मृतिश्च हेमंतशिशिरयोश्चतुर्णामपरपक्षाणा-
मष्टमीष्वष्टकाइति एवमष्टकाकर्मसु द्रव्यदेवते अभिधाय उद्देशक्रमेण
तदितिकर्त्तव्यतामाह **प्रथमाष्टकापक्षाष्टम्याꣳ स्थालीपाकꣳ श्रप-
यित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति ॥** प्रथमाष्टका अष्टकानामधेयं
कर्म भवति इति सूत्रशेषः कदा पक्षाष्टम्यां अत्र सौरादिभेदेन
मासानामनेकत्वात् अष्टम्योऽप्यनेकाइति किंमाससंबंधिन्यां अष्टम्यां
अष्टकानामधेयं कर्मेति संदेहापत्तौ पक्षाष्टम्यामित्याह पक्षे अपरपक्षे
पौर्णमास्यामूर्ध्वमिति वचनसामर्थ्यात् कृष्णाष्टमी न पुनः सौरसाव-
ननाक्षत्रमाससंबंधिनी तेषां शुक्लकृष्णपक्षत्वाभावात् तस्यां पक्षाष्टम्यां
कथं स्थालीपाकं चरुं श्रपयित्वा उक्तविधिना संसाध्य आज्याभागे
आहुतिविशेषौ हुत्वा दशाज्याहुतीः त्रिꣳशत्स्वसारइत्यादिभिर्मंत्रैः
प्रतिमंत्रं जुहोति स्थालीपाकस्य जुहोति शांता पृथिवीत्यादि स्थालीपा-
कस्यचरोः जुहोति शांताः पृथिवीत्यादिश्चतुर्भिर्मंत्रैश्चतस्त्रआहुतीर्जुहोति
प्रतिमंत्रं अत्र ऐंद्री प्रथमाष्टकेति प्राधान्यमिंद्रस्योक्तं अपूपेत्यनेन
हविषः यागावसरश्च नोक्तः सूत्रकृता अतः संदेहः कुत्र क्रियता-
मिति किंतावत्प्राप्तं साधनत्वात्प्रधानत्वादाज्यभागानंतरं क्रियतामिति
न तत्र आज्यभागाविष्ट्वाज्याहुतीर्जुहोतीतिसूत्रकारेण आज्याहुतिवि-

धानात् तर्हि तदंतेऽस्तु न तथापि स्थालीपाकस्य जुहोतीति आज्यहोमानंतरं स्थालीपाकहोमाविधानात् तस्मात्तदनंतरं युज्यते ततः अपूपेन इन्द्राय स्वाहेत्येकामाहुतिं जुहुयात् एवमुत्तरतत्रापि एवं प्रथमाष्टकेतिकर्त्तव्यतामनुविधायाधुनाइयमेवोत्तरीयास्वप्यष्टकासु इति कर्त्तव्यता इत्यभिप्रेत्य तासां विशेषमात्रमनुविधत्ते मध्यमागवेत्यादिभिः मंत्रैः मध्यमातिणाद्वितीयेत्यर्थः सा च गवा गोपशुना कर्त्तव्या इति सूत्रशेषः अत्राचार्येण यद्यपि गोपशुरुक्तस्तथापि "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्वि" तिस्मरणात् तथा "देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः। दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥ समुद्रयानं स्वीकारः कमंडलुविधारणं। महाप्रस्थानगमनं गोपशुश्च सुराग्रहः ॥ अग्निहोत्रहवण्याश्च लेहोलीढापरिग्रहः। असवर्णासु कन्यासु विवाहश्च द्विजातिषु ॥ वृत्तस्वाध्यायसापेक्ष मघसंकोचनं तथा। अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेव च। प्रायश्चित्ताऽभिधानं च विप्राणां मरणांतिकं ॥ संसर्गदोषः पापेषु मधुपर्के पशोर्वधः। दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥ शामित्रं चैवामित्राणां सोमविक्रयणं तथा। दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ। कलौ युगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः" इतिस्मरणात् गोपशोः अस्वर्ग्यत्वाल्लोकविद्विष्टत्वात् कलौ विशेषवर्जनीयत्वाच्च न गवालंभः कर्त्तव्यः किंतु अनिषिद्धश्चांतरेण अवश्यकर्त्तव्याऽष्टकादिकर्म निवर्त्तनीयं तस्यै वपां जुहोति वहत्वयं जातवेदः पितृभ्यइति तस्यै इति षष्ठीस्थाने चतुर्थी तस्याः गोवपां वहवपामित्यादिना मंत्रेण जुहोति पुनर्विश्वेभ्योदेवेभ्यः स्वाहेत्यवदानानि जुहोति शेषं पशुकल्पं पशुश्चेदित्यादिना उपरिष्टाद्वक्ष्यति "रूपं कालोनुनिर्वापः श्रवणं देवता तथा। आदौ ये विधृताः पक्षास्तइमे सर्वदाः स्मृताः" इत्येतस्य संहितासु अदर्शनात् समूलत्वेत्वनुनिर्वापादिसमभिव्याहारेण श्रौतमात्रविषयत्वात् वस्तुतस्तु नान्यस्य तंत्रे प्रततेऽन्यस्य तंत्रं प्रतीयतां इति

प्रापिकं सांतपनीयाधिकरणेऽन्यतंत्रमध्येऽग्निहोत्रदर्शनात् । श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिंडपितृयज्ञवत् । श्वः अष्टम्यां उत्तरेद्युः अन्वष्टकां अनु पश्चात् भवंतीत्यन्वष्टकाः तासु सर्वासां चतसृणामष्टकानां कर्म भवति इति शेषः केन च द्रव्येणेत्याह पार्श्वसक्थिसव्याभ्यामिति पार्श्वं च सक्थि च पार्श्वसक्थिनी च ते सव्ये च पार्श्वसक्थिसव्ये ताभ्यां पार्श्वसक्थिसव्याभ्यां अत्र तुल्याधिकरणे विशेषणीभूतस्य सव्यशब्दस्योत्तरपदत्वं छांदसं परिवृत्ते सर्वतः प्रच्छादिते आवसथ्याग्निसदने इतिकर्त्तव्यतापेक्षायामाह पिंडपितृयज्ञवत् अपराह्णे पिंडपितृयज्ञवत्तथा तदुक्तं पिंड पितृयज्ञविधिना स्त्रीभ्यश्च पिंडपितृयज्ञवत् इत्यनेन पितृपितामहप्रपितामहानां पिंडदानं प्राप्तं ततोऽधिकमुच्यते स्त्रीभ्यः मातृपितामहीप्रपितामहीभ्यः पिंडान्दद्यादिति चकारेण समुच्चीयते अत्र सामान्योपि स्त्रीशब्दः पित्रादिसन्निधानात् मात्रादिपरोऽवसीयतेऽवगम्यते उपसेचनं चकर्षूषु सुरया तर्प्पणेन चांजनानुलेपनं स्रजश्च न केवलं स्त्रीभ्यः पिंडान्दद्यात् किंतु उपसेचनं कुर्यात् कया सुरया मद्येन कासु कर्षूषु न केवलं सुरया तर्पणेन च तर्पयत्यनेनेति तर्पणसाधनं सक्त्वादि तेन चकारउपसेचनक्रियासमुच्चयार्थः करणाधिकरणयोश्चेति तर्पणशब्दोल्युडंतः अंजनं त्रैककुदं सुवीराजनं प्रसिद्धं तदलाभे लौकिकं कज्जलं अनुलेपनं सुगंधि द्रव्यं चंदनादिस्रजः अप्रतिषिद्धसुरभिपुष्पमालाः चकारोदद्यादिति क्रियासमुच्चयार्थः आचार्यांतेवासिभ्यश्चानपत्येभ्यइच्छन् यदि कामयेत्तत्तदा आचार्याय अंतेवासिभ्यश्च शिष्येभ्यः पिंडान् दद्यात् यदि ते अनपत्याः स्युः मध्या वर्षे च तुरीया शाकाष्टका एवमष्टकात्रयं सामान्यतो विशेषतश्च अनुविधाय पिन्व्येत्युद्देशक्रमप्राप्तां विशेषतश्चतुर्थीमष्टकामाह मध्या मध्ये वर्षे वृष्टिकाले प्रौष्ठपद्याऊर्द्धमष्टमीत्यर्थः तुरीया चतुर्थी शाकाष्टका शाकेन कालशाकाख्येन निर्वर्त्त्यं अष्टका शाकाष्टका इति

सूत्रार्थः ॥ अथाष्टका कर्मपद्धतिः॥तत्र मार्गशीर्ष्यां ऊर्द्ध्वं कृष्णाष्टम्यां मातृपूजापूर्वाभ्युदयिकश्राद्धं विधायाऽवसथ्याग्नौ कर्म कुर्यात् केषांचित्पक्षे अष्टकाकर्मसु आभ्युदयिकं नास्ति नाष्टकासु भवेच्छ्राद्धमितिवचनात् तत्र ब्रह्मोपवेशनादि प्राशनांते विशेषः तंडुलानंतरं पूर्वं औपासनाग्निसिद्धस्यैवापूपस्य आसादनं प्रोक्षणं च प्रोक्षणकाले तत आज्यभागांतं कृत्वा त्रिंꣳशत्स्वसारइत्येवमाद्याद्दशाहुतीर्हुत्वा स्थालीपाकेन शांतापृथिवीत्यादिभिश्चतुर्भिर्मंत्रैश्चतस्रआहुतीर्हुत्वा अपूपादिंद्राय स्वाहेत्येकामाहुतिं दत्वा स्थालीपाकादपूपाच्च स्विष्टकृतं जुहोति तद्यथा आज्यभागानंतरं त्रिंꣳशत्स्वसारउपयंति निष्कृतंꣳ समानकेतुं प्रतिमुंचमानाः क्रतूंस्तन्वते कवयः प्रजानतीर्मध्ये छंदसः परियंति भास्वतीः स्वाहा इदं स्वसृभ्यः ज्योतिष्मती प्रतिमुंचते नभोरात्रीदेवी सूर्यस्य व्रतानि विपश्यंति पशवोजायमानानानारूपामातुरस्याउपस्थे स्वाहा इदꣳ रात्र्यै एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिंद्रं तेन दस्यून्व्यसहंत देवाहंतासुराणामभवच्छचीभिः स्वाहा इदमष्टकायै अनानुजामनुजमामकर्त्तः सत्यं वदन्त्यन्विच्छ्येतत् भूयासमस्य सुमतौ यथायूयमन्यावोअन्यामतिमाप्रयुक्तः स्वाहा इदं रात्रीभ्यः अभून्मम सुमतौविश्ववेदा आष्टप्रतिष्ठामविदद्धिगाधं भूयासमस्य सुमतौ यथायूयमन्यावो अन्यामतिमाप्रयुक्तस्वाहा इदꣳ रात्रीभ्यः पंचव्युष्टीरनुपंच दोहागांपंचनाम्नीमृतवोनु पंच पंच दिशः पंचदशेनक्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा इदꣳ रात्रीभ्यः ऋतस्य गर्भःप्रथमाव्यूषुष्यपामेकामहिमानं बिभर्त्ति सूर्यस्यैकाऽचरति निष्कृतेषु धर्मस्यैकाऽचरति निष्कृतेषु धर्मस्यैका सवितैकां नियच्छतु स्वाहा इदꣳ रात्र्यै याप्रथमाव्यौछत्साधेनुरभवद्यमे सा नःपयस्वती धुक्ष्वोत्तरामुत्तरामुत्तराꣳ समाꣳ स्वाहा इदं रात्र्यै शुक्रऋ-

षभानभसाज्योतिषागाद्विश्वरूपा शवलीरग्निकेतुः समानमर्थंꣳ सपश्यमाना विभ्रती जरामजरउषआगात्स्वाहा इदं रात्र्यै ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानां एका सती बहुधोषौ व्यौछत्सा जीर्णात्वं जरयासि सर्वमन्यत्स्वाहा इदꣳ रात्र्यै अथ स्थालीपाकेन चतस्रआहुतयः शांता पृथिवीत्यादिभिर्मंत्रैः प्रतिमंत्रं जुहोति तद्यथा शांतापृथिवी शिवमंतरिक्षꣳ शन्नोद्यौरभयं कृणोतु शन्नोदिशः प्रदिशआदिशोनोहोरात्रे कृणुतं दीर्घमायुर्व्यंर्ष्णवै स्वाहा इदं पृथिव्या अंतरिक्षाय दिवे दिग्भ्यः प्रदिग्भ्यआदिग्भ्योऽहोरात्राभ्यां च आपोमरीचीः परिपांतु सर्वतोधाता समुद्रोऽअपहंतु पापं भूतं भविष्यदकृतद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याꣳ स्वाहा इदमद्भ्योमरीचिभ्योधात्रे समुद्राय ब्रह्मणे च विश्वे आदित्सावसवश्च देवारुद्रागोप्तारोमरुतश्च संतु ऊर्ज्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहा इदं विश्वेभ्यः आदित्येभ्योवसुभ्योदेवेभ्योरुद्रेभ्यो मरुद्भ्यः प्रजापतये परमेष्ठिने च अष्टकायै स्वाहा इदमष्टकायै अथ अपूपादेकाहुतिः इंद्राय स्वाहा इदमिन्द्राय स्थालीपाकादपूपाच्च स्विष्टकृत् ततोमहाव्याहृत्यादिप्राजापत्यांतं होमं विधाय प्राशनादिसमापयेत् श्वोऽन्वष्टकाकर्मावसथ्याग्नावेव तत्र नित्यवैश्वदेवानंतरं अपराह्णे प्राचीनावीती नीवीबंधनं कृत्वा दक्षिणामुखः परिवेष्टितेऽग्निसमीपे अग्नेरुत्तरतः उपविश्याग्नेयादिदक्षिणांतमप्रदक्षिणमग्निं दक्षिणाग्रैः कुशैः परिस्तीर्य अग्नेः पश्चिमतः दक्षिणसंस्थानि पात्राण्येकैकशआसादयति यथा स्रुवं चरुस्थालीं वा स्रुक्पक्षे स्रुगनंतरं चरुस्थालीमुदकं आज्यं मेक्षणं स्फ्यं अपात्रं सकृदाछिन्नानि क्रीतयोर्लब्धयोर्वा छागस्य पार्श्वसक्थ्योर्मांसं सुरां सक्तून् अंजनं अनुलेपनं स्रजः सूत्राणि च ततः पार्श्वसक्थ्यो र्मांसं श्लक्ष्णं अणु शश्वि-

त्वा प्रक्षिप्तासादितोदकायां चरुस्थाल्यां प्रक्षिप्याग्नावधिश्रित्याप्रादक्षिणं मेक्षणेन चालयित्वा शृतमांसमासादितेन घृतेनाभिघार्य दक्षिणतउद्वास्य पूर्वेणाऽग्निमानीयोत्तरतः स्थापयेत् ततः सव्यं जान्वाच्य मेक्षणेन मांसमादायाग्नये कव्यवाहनाय स्वाहेत्येकामाहुतिं हुत्वा इदमग्नये कव्यवाहनायेति त्यागं विधाय पुनर्मेक्षणेन मांसमादाय सोमाय पितृमते स्वाहेति हुत्वा इदं सोमाय पितृमतइति त्यागं विधाय मेक्षणमग्नौ प्रास्याग्नेर्दक्षिणतः पश्चाद्वा दक्षिणामुखउपविश्य सव्यं जान्वाच्योपलिप्य स्फ्येनापहताअसुरारक्षाꣳसि वेदिषदइति लेखां उल्लिख्य तथैव द्वितीयां उदकमुपस्पृश्य येरूपाणीत्युल्मुकं प्रथमलेखाग्रे निधाय तथैव द्वितीयलेखाग्रे उदकमुपस्पृशेत् ततउदपात्रमादाय प्रथमलेखायां पितृतीर्थेनामुकसगोत्रास्मत्पितरमुकशर्मन्नवनेनिक्ष्वेत्येवं पितामहप्रपितामहयोरवनेजनं दत्वा द्वितीयलेखायां अमुकसगोत्रेऽस्मन्माता अमुकी देवी अवनेनिक्ष्वेत्येवं पितामहीप्रपितामह्योः अवनेजनं दत्वा सकृदुपमूललूनानि दक्षिणाग्राणि बर्हिर्लेखयोरास्तीर्य तत्रावनेजनक्रमेणामुकगोत्रास्मत्पितरमुकशर्मन्नेतत्ते मांसं स्वधा नमइति पिंडं दत्वा पितामहप्रपितामहयोश्चैवं प्रदायापरलेखायां अमुकगोत्रेस्मन्मातः अमुकदेवि एतत्ते मांसं स्वधा नमइति पिंडं दत्वा पितामहीप्रपितामहीपिंडद्वयं प्रदाय प्रतिपिंडदानं इदं पित्रे इदं पितामहाय इदं प्रपितामहाय इदं मात्रे इदं पितामह्यै इदं प्रपितामह्यै इति त्यागं विधाय इच्छया स्त्रीपिंडसन्निधानजनसकृदाछिन्नाऽस्तरणपूर्वकं अनपत्येभ्यः आचार्यांतेवासिभ्यश्च यथाक्रमं मांसपिंडान् दद्यात् चकारादन्येभ्योऽपि सपिंडादिभ्यः स्त्रीपिंडसन्निधाने अवटत्रयं खात्वा तेषु अमुकगोत्रे अमुकी देवी सुरां पिबस्वेत्येकत्रावटे सुरां प्रसिच्य तथैव पितामहीप्रतामहीइतरयोरवटयोरासिच्य सक्तूनादायाऽमुकगोत्रेऽमुकि देविदे तृप्यस्वेति मातृप्रभृतिभ्यः सक्तून्प्रत्यवटं प्रक्षिप्य ततस्तथैव अंजस्वेति

मातृप्रभृतिभ्योंजनं दत्वा अनुलिंपस्वेत्यनुलेपनं च दत्वा स्त्रजोपि न-
ह्यस्वेति स्त्रजोदत्वाऽत्र पितरइत्यर्धं च जपित्वा पराङावृत्य वायुं
धारय नातमनात् उदङ्मुखआसित्वा तेनैवावृत्यामी मदंतैत्यर्धंचं ज-
पित्वा पूर्ववदवनेज्य नीवीं विस्रठ्य नमोवइति प्रतिमंत्रमजलिं करोति
गृहान्नइत्याशिषं प्रार्थ्यैतद्वइति प्रतिपिंडं सूत्राणि दत्वोर्जमिति पिंडेष्व-
पोनिषिच्य पिंडानुत्थाप्य उखायामवध्वायावजिघ्रति सकृदाछिन्नान्यग्नौ
प्रास्योल्मुके च प्रक्षिप्योदकं च स्पृष्ट्वाचम्य आन्वष्टक्यं श्राद्धं कुर्यात्
उखा ताम्रमयी मृन्मयी वा शिल्पिभ्यः स्थपतिभ्यश्च आददीत मतीसदा
उखा मांससान्नाय्योस्वा चतोखा पशू उखा पिंडपितृयज्ञोखा इत्येका-
ष्टका पौष्याऊर्द्धं कृष्णाष्टभ्यां द्वितीयाष्टका तत्र प्रथमप्रयोगे मातृपूजा-
पूर्वकं आभ्युदयिकं कृत्वा आवसथ्याग्नौ कर्मकुर्यात् तत्रब्रह्मोपवेशनं
प्रणीता प्रणयनं परिस्तरणं विधाय पात्राण्यासादयति पवित्रच्छेदनानि
पवित्रे प्रोक्षणीपात्रं आज्यस्थाली द्वे चरुस्थाल्यौ संमार्गकुशाः उपय-
मनकुशाः समिधः स्रुवः आज्यं काष्मर्यमयौं हस्तमात्र्यौ वपाश्रण्यौ
शाखाविशाखे अष्टका चरुतंडुलाः हस्तमात्रं वारणं शूलं पशुश्रप-
णार्थमुखा ताम्रमयी मृन्मयी वा पाशुकचरुतंडुलाश्च इत्येतानि अथो-
पकल्पनीयान्युपकल्पयंति ल्पक्षशाखा पलाशशाखा त्रिहस्तप्रमाणा
व्याममात्रा कौशी त्रिगुणरशना उपाकरणतृणमेकं दर्भतरुणं द्विगु-
णरशना कौशी व्याममात्री पशुच्छागः पात्रेजनी उदकपूर्णा स्थाली
असिः शस्त्रं हिरण्यं शकलानि षट्पदाज्यार्थं दधि चेति ततः प-
वित्रकरणादि प्रोक्षणांते विशेषः विश्वेभ्यस्त्वा देवेभ्योजुष्टम्प्रोक्षामीति
पाशुकचरुतंडुलानां प्रोक्षणं आज्यनिर्वापानंतरमष्टकाचरुपात्रे तंडुलान्
प्रक्षिप्य पाशुकचरुपात्रे तंडुलचरुप्रक्षेपं कुर्यात् ततोब्रह्माज्यं स्वय-
मष्टकाचरुमन्यः पत्नी चापाशुकचरुं युगपदग्नौ उदक्संस्थमधिश्रपयंति
ततः पर्यग्निकरणादिप्रोक्षण्युत्पवनांतं यजमानएव कुर्यात् अथाग्नेः

पश्चाद्दक्षिणतआरभ्य उदक्संस्थाः प्रागग्राः कुशास्तरणोपरिप्लक्षशाखाआस्तीर्य अग्नेः प्रादक्षिण्येन पुरस्ताद्गत्वा पलाशशाखामग्निकुंडलग्नां उदङ्मुखोपविष्टः वितस्तिमात्रं निखाय त्रिगुणरशनामादाय प्रादक्षिण्येन पलाशशाखां त्रिर्वेष्टयति अथोपाकरणतृणेन विश्वेभ्योदेवेभ्यउपाकरोमीति पशुमुपाकरोति स्पृशति शरीरे द्विगुणरशनया शृंगमध्ये तत्तूष्णीं दक्षिणकर्णाऽधस्ताद्बध्नाति विश्वेभ्योदेवेभ्योनियुनज्मीति पलाशशाखायां पशुं नियुक्ति अथ प्रोक्षणीरादाय ब्रह्मन्हविः प्रोत्क्षिप्ष्यामीति ब्रह्माणमामंत्र्य ॐ प्रोक्षेति ब्रह्मणाऽनुज्ञातोविश्वेभ्यस्त्वां देवेभ्योजुष्टं प्रोक्षामीति पशुं प्रोक्ष्य प्रोक्षणिजलं पशोरास्ये कृत्वा शेषं पशोरधस्तादुत्प्रोक्षति सिंचति अथ यथागतमागत्य स्वासने उपविश्य उपयमनकुशानादायसमिधोभ्याधायपर्युब्रह्मणान्वारब्धआघारौहुत्वाआज्यलिप्तेन तत्स्रुवाग्रेण ललाटे अंसयोः श्रोण्योश्च पशुं समनक्ति अंजनं करोति ततोसिमादायस्रुवेणैवसंयोज्यासिस्रुवाग्राभ्यां पशोर्ललाटमभिमृशति ततोऽग्नेरुल्मुकमादाय आयप्रदक्षिणं परिगच्छन् पशुं आज्यं शाखामग्निं पर्यग्निकृत्वोल्मुकमग्नौ प्रास्य तावत्प्रति परीत्य अप्रादक्षिण्येनागत्य आसृततृणद्वयमादाय पशुं शिरसउन्मुच्यकंठे बध्वा पलाशशाखा ततउन्मुच्य रशनया वामकरेण धृत्वा दक्षिणेन वपाश्रपणीभ्यामन्वारब्धमुदङ्नयति तत्रैकं तृणं भूमौ धृत्वा तस्मिन्प्रत्यक्शिरसं वाउदक्पादं पशुं निपात्य स्वासने उपविशति यजमानः अपरः कश्चिन्मुखं संगृह्य संज्ञप्यमाने यजमानः पूर्णाहुतिवदाज्यं संस्कृत्य स्वाहा देवेभ्यइत्येकामाहुतिं हुत्वाइदं देवेभ्यइति त्यागं कृत्वा संज्ञप्ते देवेभ्यः स्वाहेति तेनैवाज्येन द्वितीयां दत्वा इदं देवेभ्यः अपराः पंचाहुतीस्तूष्णीं जुहोति इदंप्रजापतये इति त्यागः पंचसु ततउत्थाय पशुं मोचयित्वा वपाश्रपणीभ्यां नियोजनीं त्यजति ततः पात्रेजननीमादाय पशोः प्राणान्स्वयमेव शुंधति यथा पात्रे जनी जलमादाया-

दाय मुखं दक्षिणोत्तरनासिके दक्षिणोत्तरे चक्षुषी दक्षिणौ कर्णौ नाभिं मेढ्रं पायुं एकीकृत्य पादांश्च क्रमेण शुंधति शेषं पशोः पश्चान्निषिंचन्निति ततःपशुमुत्तानंकृत्वा नाभ्यग्रे उदगग्रं तृणं निधाय असिधारया तृणमभिनिधाय छिनत्ति अथ द्विधा भूतस्य तृणमूलमादाय उभयतोलोहितेनाक्तां निरस्य वपामुत्खिदति अनंतरं वपाश्रपण्यावादाय प्रोर्णोति ततश्छिनत्ति वपां तां च प्रक्षाल्य अग्नेरुत्तरतः स्थित्वा प्रतप्य शाखाग्न्योरंतरेण हुत्वाऽग्नेर्दक्षिणतः स्थित्वा वपां श्रपयति श्रप्यमाणं च स्रुवेणाज्यं गृहीत्वाभिघार्यप्रत्याहृत्य ब्रह्माणं प्रदक्षिणीकृत्य स्वासने उपविश्य स्रुवेणाज्यं गृहीत्वा वपायां प्राणदानं विधाय प्लक्षशाखास्वासादयति आलभेत च ततः ब्रह्मणान्वारब्धआज्यभागौ हुत्वा त्रिꣳशत्स्वसारइति दशाहुतीरन्वन्वारब्धोहुत्वा अष्टकाचरुणा शांता पृथिवीत्यादिकाश्चतस्रोहुत्वा वपाहोमाय वामहस्तस्थे स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय वपां द्विधाऽवदाय गृहीत्वा पुनर्हिरण्यशकलमवधाय द्विरभिघार्य । वहवपां जातवेदः पितृभ्यः इतिप्राचीनावीतिनोदक्षिणामुखस्य होमः इदं पितृभ्यः इदं जातवेदसइति वा त्यागं विधाय यज्ञोपवीती भूत्वोदकं स्पृष्ट्वा वपाश्रपण्यौ विपर्यस्ते अग्नौ प्रास्य पशुं विशास्ति तद्यथा हृदयं जिव्हां क्रोडं सव्य बाहुं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिणाश्रोणिरिति सर्वा च दानपक्षे दक्षिणबाहुं गुदतृतीयां सव्या श्रोणिरिति अंगानि स्विष्टकृदर्थानि यदा त्रीणि तदा हृदयं जिव्हां क्रोडमिति त्रीणि पंचावदानपक्षे हृदयं जिव्हांक्रोडं सव्यबाहुं पार्श्वे इति पंच अवद्यति खंडयति तस्मिन्पक्षे शेषान्स्विष्टकृतेऽवद्यति ततः अवदानानि प्रक्षाल्य शूलेन हृदयं प्रतृद्य उखामग्नावधिश्रित्य अवदानानि प्रक्षिपति स्वल्पमुदकं च ततः त्रिप्रच्युते हृदयमुपरि कृत्वा पृषदाज्येन हृदयमभिघार्य इतराण्यवदानानि त्र्यंगवर्जितानि आज्येनाभिघारयति अथोखामुद्वास्य अवधाना-

न्युद्धृत्य कस्मिंश्चित्पात्रे हृदयादिक्रमेण उदक्संस्थानि निधाय स्रुवेणाज्यमादाय हृदयादीनां त्र्यंगवर्जितानां क्रमेण प्राणादानं कृत्वा शाखाग्न्योरंतरेणाहृत्य प्लक्षशाखासु हृदयादिक्रमेणोदक्संस्थान्यासादयति ततस्त्र्यंगवर्जितान्यालभते अथ प्रधानहोमार्थं स्रुवेण आज्यमुपस्तीर्य हिरण्यशकलमवधाय हृदयादिभ्यः क्रमेण द्विर्द्विरवदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदायोपरिक्षिप्त्वा तदुपरि हिरण्यशकलं दत्वा सकृदभिघार्य विश्वेभ्योदेवेभ्यः स्वाहेति जुहुयात् इदं विश्वेभ्योदेवेभ्यः ततः स्विष्टकृदर्थस्त्रुवउपस्तीर्य हिरण्यशकलं दत्वा द्विर्द्विरवदाय स्रुवे कृत्वा चरुद्वयाच्च सकृत्सवदाय हिरण्यशकलमवधाय द्विर्द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेति जुहुयात् इदमग्नये स्विष्टकृते इति त्यागः ॥ असर्वावदानपक्षे प्रधानावदानशेषात् स्विष्टकृद्धोमइति शेषः ततोमहाव्याहृत्यादि प्राजापत्यांतानवाज्याहुतीर्हुत्वा ब्रह्मान्वारब्धोहुत्वा संस्रवप्राश्य ब्रह्मणे पश्वगं दक्षिणां दद्यात् ततः स्मृत्यंतरोक्तपंचविंशतिब्राह्मणभोजनं च दद्यात् अस्यैवपशोः सव्यपार्श्वसक्थिभ्यामपरदिने अन्वष्टकाकर्म पूर्ववत् मास्या ऊर्द्धं कृष्णाष्टम्यां तृतीयाप्राजापत्याष्टका सा यथाप्रथमाष्टका तत्र अपूपस्थाने कालशाकचरुस्तदग्निः सिद्धएव तमासादयेत् आसादनकाले प्रोक्षणकाले प्रोक्षयेत् ततोऽपूपयागस्थाने प्रजापतये स्वाहेति कालशाकं जुहुयात् शेषं समानं कालशाकालाभे वास्तुकं अन्येद्युः पूर्ववदन्वष्टकाकर्म प्रौष्ठपद्याः ऊर्द्धं कृष्णाष्टम्यां चतुर्थी पित्र्या शाकाष्टका सा च प्रथमाष्टकावत् एतावान्विशेषः चरुस्थालीद्वयं तंडुलानंतरं कालिकशाकमासादयेत् कालिकशाकचरुसंबंधिमासादनादि होमांतं कर्म प्राचीनावीति दक्षिणामुखः कुर्यात् अन्यद्यज्ञोपवीती पूर्वाभिमुखकालिकशाकचरुसंबद्धं कर्म कृत्वा उदकमुपस्पृशेत् अपूपहोमस्थाने पितृभ्य स्वाहेति शाकचरोरेकामाहुतिं जुहुयात् प्रातरन्वष्टकाकर्म पूर्ववत् ॥

अथातःशालाकर्म ॥ १ ॥ पुण्याहेशालां-
कारयेत् ॥ २ ॥ तस्याअवटमभिजुहोत्यच्युतायभौ-
मायस्वाहेति ॥ ३ ॥ स्तंभमुच्छ्रयति इमामुच्छ्र-
याभिभुवनस्यनाभिंवसोर्धाराम्प्रतरणीम्वसूनाम् ॥
इहैव ध्रुवा न्निमिनोमि शालां क्षेमे तिष्ठतु घृत-
मुक्षमाणा अश्वावती गोमती सूनतावत्युच्छ्रयस्व
महते सौभगाय आत्वाशिशुराक्रन्दत्वा गावोधे-
नवोवाश्यमानाः ॥ आ त्वा कुमारस्तरुणआवत्सो-
जगदैः सह आत्वापरिस्रुतःकुम्भऽआदध्नः कलशै-
रुप ॥ क्षेमस्य पत्नी बृहतो सुवासा रयिं नोधेहि
सुभगे सुवीर्यम् अश्वावद्गोमदुर्जस्वत् पर्णावनस्पतेरिव
अभिनः पूर्वतांꣳ रयिरिदमनु श्रेयोवसानइति चतु-
रः प्रपद्यते ॥ ४ ॥ अभ्यंतरतोग्निमुपसमाधाय
दक्षिणतोब्रह्माणमुपवेश्योत्तरतोउदपात्रम्प्रतिष्ठाप्य
स्थालीपाकꣳ श्रपयित्वा निष्क्रम्य द्वारसमीपे
स्थित्वाब्रह्माणमामंत्रयते ब्रह्मन् प्रविशामीति
॥ ५ ॥ ब्रह्मानुज्ञातः प्रविशत्यम्प्रपद्ये शिवं प्रप-
द्यइति ॥ ६ ॥ आज्यꣳ संꣳस्कृत्येहरतिरित्या-
ज्याहुतीर्हुत्वा पराजुहोति वास्तोष्पतेप्रतिजा-
नीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः यत्वेमहेप्प्र-

तितन्नोजुषस्व शन्नोभवद्विपदे शं चतुष्पदे स्वाहा ॥ वास्तोष्पते प्रतरणोनएधि गयस्फानोगोभिरश्वेभिरिन्दो ॥ अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रतिनोजुषस्व स्वाहा वास्तोष्पते शग्मयासर्ठ॰सदा ते सक्षीमहिरण्वयागातुमत्या याहि क्षेमउत योगे वरन्नोयूयम्पात स्वस्तिभिः सदा नः स्वाहा अमीवहावास्तोष्पते विश्वा रूपाण्याविशन् सखा सुशेवएधि नः स्वाहेति ॥ ७ ॥ स्थालीपाकस्य जुहोति अग्निमिन्द्रंबृहस्पतिं विश्वान्देवानुपव्हये सरस्वतीं च वाजी च वास्तु मे दत्तवाजिनः स्वाहा ॥ सर्पदेवजनान्त्सर्वान्हिमवन्तर्ठ॰सुदर्शनम् वसुर्ठ॰श्च रुद्रानादित्यानीशानं जगदैः सह एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा पूर्वाह्णमपराह्णंचोभे मध्यंदिना सह प्रदोषमर्द्धरात्रं च व्युष्टां देवींमहापथाम् एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ॥ कर्त्तारं च विकर्त्तारं विश्वकर्माणमोषधीश्च वनस्पतीन् एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा धातारं च विधातारं निधीनां च पतिर्ठ॰सह एतान्सर्वान्प्रपद्ये हं वास्तु मे दत्त वाजिनः स्वाहा ॥ स्योनर्ठ॰शिवमिदं वास्तु

दत्तं ब्रह्म प्रजापती सर्वाश्च देवताः स्वाहेति ॥ ८ ॥ प्राशनांते कार्ठ-स्ये संभारानोप्योदुंबरपालाशानि ससुराणि शाड्वलं गोमयं दधिमधुघृतं कुशान्यवार्ठ. श्वासनोपस्थानेषु प्रोक्षेत् ॥ ९ ॥ पूर्वे संधावभिमृशति श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति ॥ १० ॥ दक्षिणे संधावभिमृशति यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति ॥ ११ ॥ पश्चिमे संधावभिमृशति अन्नं च त्वा ब्राह्मणाश्च पश्चिमे संधौ गोपायेतामिति ॥ १२ ॥ उत्तरे सन्धावभिमृशति ऊर्त्कासूनृता चोत्तरे सन्धौ गोपायेतामिति ॥ १३ ॥ निष्क्रम्य दिशउपतिष्ठते केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केनादित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोस्तु तौ मा पुरस्ताद्गोपायेतामिति ॥ १४ ॥ अथ दक्षिणतो गोपायमानं च मा (रक्षमाणं) च दक्षिणतोगोपायेतामिति ॥ १५ ॥ अथ पश्चात् दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणोजागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तो मा पश्चाद्गोपायेतामिति ॥ १६ ॥ अथोत्तरतः अस्वन्यश्च मानवद्राणश्चौत्तरतोगोपायेता-

मिति चंद्रमावाअस्वप्नोत्यहवैंगोपायमानठं रात्रीररक्षमाणाते प्रपद्ये ताभ्यांनमोस्तुतेमादक्षिणतोगोपायेतांवायुरनवद्राणस्तो प्रपद्ये ताभ्यां नमोस्तु तौमोत्तरतोगोपायेतामिति ॥ १७ ॥ निष्ठितां प्रपद्यते धर्मस्थूणा राज्यठं श्रीस्तुपमहोरात्रे द्वारफलके इन्द्रस्य गृहावसुमंतो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह यन्मे किंचिदस्त्युपहुतः सर्वगणः सखायः साधुसंवृतः तां त्वा शालेऽरिष्टवीरा गृहानः संतु सर्वतइति ॥ १८ ॥ ततोब्राह्मणभोजनं ॥ १९ ॥ ४ ॥

अथातःशालाकर्म अथ अष्टकाकर्मानंतरं यतः आवसथ्याधानादीनि शालाग्नौ साध्यानि अनुविहितानि शालाकरणं च नोक्तं अतोहेतोः शालाकर्म शालाया गृहस्य क्रिया व्याख्यास्यते इति सूत्रशेषः पुण्याहे शालां कारयेत् पुण्यं शुभं मलमासबालवृद्धास्तमितगुर्वादित्यसिंहस्थगुरुक्षयमासदिनत्र्यहक्रूरग्रहाक्रांतयुक्तनक्षत्रादिदोषरहितं ज्योतिःशास्त्रादिनोक्तग्रहारंभविहितमासपक्षतिथिवारनक्षत्रयोगकरणमुहूर्त्तचंद्रताराबललग्नादिगुणान्वितं अहः पुण्याहं तस्मिन्पुण्याहे शालांगृहं कारयेत् निर्मापयीत पुनः पुण्याहग्रहणं उदगयनशुक्लपक्षयोरनियमार्थं शालां कारयेदित्युक्तं तच्च शालाकरणं देशमंतरेण न संभवति इति सामान्यतोदेशे प्राप्ते "यन्नाम्नातं स्वशाखायां पारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्" इतिवचनात् पारस्कराचार्येणानुक्तमपि गोभिलगृह्यसूत्रोक्तदेशे विशेषं

अविरोधात् अपेक्षितत्वाच्चात्र लिखामः तद्यथा कीदृशे देशे शालां कारयेत् समे लोमशे अविभ्रंशिनि प्राचीनप्रवणे उदक्प्रवणे वा अक्षाराकंटकीकटुकोषधिवति विप्रस्य गौरपांसौ क्षत्रियस्यलोहितपांसौ वैश्यस्य कृष्णपांसौ वास्तुशास्त्रमते वैश्यस्य पीतपांसौ शूद्रस्य कृष्णपांसौ स्थिरा श्रेष्ठा एकवर्णे अशुष्के अभूधरे मरौ निर्जले देशे ब्रह्मवर्चसकामस्य तृणयुक्ते पशुकामस्य मृदुतृते शालासंमिते मंडलाद्वीपसंमितं वा स्वयं खातश्वभवति वा यशस्कामस्य बलकामस्य प्राग्द्वारां पुत्रपशुकामस्योदग्द्वारां सर्वकामस्य दक्षिणद्वारां न प्रत्यक्द्वारां मुख्यद्वाररहितां पूर्वादितः प्रदक्षिणक्रमेणाश्वत्स्थप्लक्षवटौदुंबरवृक्षवर्जितं कारयेत् भवनस्य पूर्वादौवटौदुंबराश्वत्स्थप्लक्षाः सार्वकामिकाः विपरीतास्त्वसिद्धिदाइति मत्स्यपुराणे तथा "कंटकीक्षीरवृक्षश्च आसन्नः सफलोद्रुमः" धनहानिं प्रजाहानिं कुर्वंति क्रमशस्तथा ॥ न छिंद्याद्यादितानंद्या नंतरे स्थापयेच्छुभान्। पुंनागाशोकबकुल शमीतिलकचंपकान् ॥ दाडिमीपिप्पलीद्राक्षा तथा कुसुममंडपं ॥ जंबीरपूगपनस द्रुममंजरीभिर्जातीसरोजशतपत्रिकमल्लिकाभिः ॥ यन्नालिकेरकदलीदलपाटलादिभिर्युक्तं तदत्र भवनं श्रियमातनोति ॥ **तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति ॥** अत्रावटमित्येकवचनं अन्येषां त्रयाणामुपलक्षणार्थं। खातं अभिमुखेन जुहोति अच्युताय भौमाय स्वाहेति अत्रावटमित्येककचनं अन्येषां त्रयाणामुपलक्षणार्थं संस्कार्यत्वाविशेषात् गृहं संमार्ष्टीतिवदेकवचनं चत्वारोवटाः कुतइति चेत् धवलगृहस्य स्तंभशालारूपस्य चतुर्षु कोणेषु चत्वारोमूलस्तंभा भवति ते च शिलामुच्छ्रीयंते शिलाश्च अवटेष्वित्यतएव चत्वारः यतश्चतुर्षु कोणेषु आग्नेयादिषु चत्वारोवटाभवंति तेष्वन्येनैवाज्येन होमः **स्तंभमुच्छ्रयतीमामुच्छ्रयामीत्यादि**स्तंभमुच्छ्रयति उत्थापयति अवटे मिनोतीत्यर्थः केन मंत्रेण इमामुच्छ्रयामीत्याश्रेयोवसानाइत्यनेन चतुरः

ततोनेनैव मंत्रेण नैऋत्यावटे वायव्यावटे चतुरः स्तंभानुच्छ्रयति इतरगृहेषु चतुर्षु कोणेषु शिलान्यासएव न भवति एभिर्मंत्रैः प्रपद्यंते यतशालां प्रपद्यते प्रविशति अभ्यंतरतोग्निमुपसमाधाय दक्षिणतोब्रह्माणमुपवेश्योत्तरतउदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳ श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामंत्रयते ब्रह्मन्प्रविशामीति ब्रह्मानुज्ञातः प्रविशत्यृचं प्रपद्ये शिवं प्रपद्यइति अभ्यंतरतः अर्द्धनिष्पन्नायाः शालायामध्ये अग्निमावसथ्यं उपसमाधाय पंचभूसंस्कारपूर्वकं स्थापयित्वा दक्षिणतो ब्रह्माणमुपवेश्य उत्तरतः अग्नेरुत्तरप्रदेशे उदपात्रं जलपूर्णताम्रादिभाजनं प्रतिष्ठाप्य निधाय अत्र पुनर्ब्रह्मोपवेशनवचनं उदपात्रप्रतिष्ठापनाऽवसरज्ञापनार्थं स्थालीपाकचरुꣳ श्रपयित्वा यथाविधि पंक्त्या ब्रह्माणं ऋत्विजं आमंत्रयते संबोधयति कथं ब्रह्मन्प्रविशामेति आमंत्रितेन ब्रह्मणा प्रविशस्वेत्यनुज्ञातः प्रसूतः प्रविशति शालां प्रपद्ये ऋतं प्रपद्ये शिवं प्रपद्यइति मंत्रेण आज्यꣳ संस्कृत्येहरतिरित्याज्याहुतीर्हुत्वा पराजुहोतिवास्तव्य इत्यादि अत्र प्राप्तमप्याज्यसंस्कारविधानं आघारादर्वाक् इहरतिरिति आज्यहोमप्राप्त्यर्थं आज्यसंस्कारानंतरं पर्युक्षणांते इहरतिहरमध्वग्नि धृतिस्वाहेत्येकां उपसृजमित्यादि सुदीधरत्स्वाहेति द्वितीयामाहुतिं जुहोति वास्तोष्पतइति चतसृभिऋग्भिरपराः प्रत्यृचवृतस्तआज्याहुतीर्जुहोति ततआघारावाज्यभागौ स्थालीपाकस्य जुहोति अग्निमिंद्रमित्यादि ततः स्थालीपाकस्य चरोरग्निमिंद्रमित्यादिभिः षड्भिर्मंत्रैः प्रतिमंत्रं मंत्राहुतीर्जुहोति प्राशनांते कांꣳस्ये संभारानौदुंबरपलाशानि ससुराणि शाड्वलं गोमयं दधि मधु घृतं कुशान् यवांश्चासनोपस्थानेषु प्रोक्षेत् ततः स्विष्टकृदादिसंस्रवप्राशनावसानकांस्ये कांस्यमये पात्रे संभारान् वक्ष्यमाणानोप्य कृत्वा औदुंबरपत्राणि ससुराणि सक्षीराणि शाड्वलं दूर्वां गोमयं अरोगिण्यादि गौः सक्त् दधि मधु घृतं यवान् निगदव्याख्यातान् आसनानि च उपस्थानानि च आसनोपस्थानानि

वास्तुशास्त्रोपदिष्टानि प्रोक्षेत् अभिषिंचेत् इत्यर्थः अत्र आसनानि नागदंतादीनि स्थाना न्युपस्थानानि देवतास्थानानि पूर्वसंधावभिमृशति श्रीश्चत्वेति ततः शालायाः पूर्वे संधौ अभिमृशति पूर्वसंधिप्रवेशं आलभते श्रीश्चत्वेति मंत्रेण एवं दक्षिणे संधौ यज्ञस्य त्वेति मंत्रेण तथैव पश्चिमे संधौ अन्नं च त्वेति तद्वदुत्तरे अर्कत्वेति निष्क्रम्य दिशउपतिष्ठते एवं शालायाः पूर्वाभिसंधि अत्र अभिमर्शनं कृत्वा बहिर्निष्क्रम्य दिशः प्राचीप्रमुखाश्चतस्त्रः केता च मासुकेताचेत्यादिभिश्चतुर्भिर्मंत्रैः प्रदक्षिणक्रमेण प्रतिमंत्रं तूपतिष्ठते स्तौति निष्ठितां प्रपद्यते धर्म स्थूणेति निष्ठितां निर्मितां संपूर्णामिति यावत् प्रपद्यते प्रविशति धर्मस्थूणेत्यादिना सतुर्वसतइत्यंतेन मंत्रेण ततोब्राह्मणभोजनमिति सूत्रार्थः अथ प्रयोगपद्धतिर्लिख्यते ॥

अथशालाकर्मोच्यते ॥ तत्र पुण्याहे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा पूर्णाहुतिवदाज्यं संस्कृत्य स्तंभस्थानावटेषु चतुर्षु प्रत्यवटमाग्नेयकोणादारभ्य अच्युताय भौमायेति प्रत्याहुतित्यागः अथ होमक्रमेण अवटेषु तूष्णीं शिलां स्थापयित्वा तदुपरि इमामुच्छ्रयामीत्यादिना मंत्रेण श्रेयोऽवसानइत्यंतेन **इमामुच्छ्रयामिभुवनस्य नाभिं वसोर्द्धारां प्रतरणी वसूनां इहैव ध्रुवांनिमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमानां अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय आत्वा कुमारस्तरुणआवत्सोजगदैः सह आत्वापरिस्रुतः कुंभआआध्नः कलशैरुप क्षेमस्य पत्नी बृहती सुवासारयिं नोधेहि सुभगे सुवीर्यम्** अश्वावद्गोमदुर्जस्वत्पर्णं वनस्पतेरिव **अभितः पूर्यंतार्द्धं रयिदिदमुनश्रेयोवसान** इत्यनेन मंत्रेण होमक्रमेणैव चतुर्षु अवटेषु चतुरः स्तंभानुच्छ्रयति मिनोति स्तंभाभावे अनेनैव मंत्रेण प्रत्यवटं शिलां स्थापयेत् अर्द्धनिष्पन्नायां शालायां तन्मध्यप्रदेशे पंचभूसंस्कारपूर्वकं आवसथ्याग्निं स्थापयित्वा

ब्रह्माणमुपवेश्य उत्तरतउदपात्रं प्रतिष्ठाप्य प्रणीता प्रणयनं विधाय कुशकंडिकापूर्वकं चरुं श्रपयित्वा प्रोक्षण्युत्पवनांते बहिर्निष्क्रम्य द्वारसमीपे गृहाभिमुखं स्थित्वा ब्रह्मन्प्रविशामीति ब्रह्माणमामंत्र्य प्रविशस्वेति ब्रह्मणानुज्ञातः ऋतं प्रपद्ये शिवं प्रपद्यइति मंत्रेण शालायां प्रविशेत् अथ स्वासने उपविश्य उपयमनकुशानादाय समिदाधानपर्युक्षणानि कृत्वा इहरतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेति आज्याहुतिं जुहुयात् इदमग्नये इति त्यागं विधाय उपसृजं धरुणं मात्रे धरुणोमातरं धयन् रायस्पोषमस्मासुदीधरत्स्वाहेति मंत्रेण पुनर्जुहुयात् इदमग्नये अपराश्चतस्त्रआहुतयो **वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः यत्त्वेमहेप्रतितन्नोजुषस्व शन्नोभव द्विपदे शं चतुष्पदे स्वाहा** इदं वास्तोष्पतये **वास्तोष्पते प्रतरणोन एधि गयस्फानोगोभिरश्वेभिरिंदो अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नोजुषस्व स्वाहेति** द्वितीयां इदं वास्तोष्पतये **वास्तोष्पते शग्मयासंसदा ते सक्षीमहिरण्वयागातुमत्यापाहि क्षेमउतयोगे वरन्नोयूयं पात स्वस्तिभिः सदानः स्वाहेति** तृतीयां इदं वास्तोष्पतये **अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् सखासुसेव एधि नः स्वाहे** त्यनेन चतुर्थीं जुहुयात् इदं वास्तोष्पतयइति चतसृषु त्यागः ततः आघारावाज्यभागौ हुत्वा चरुणा अग्निमिंद्रं इत्यादिभिः षड्भिर्मंत्रैः षडाहुतीर्जुहुयात् तद्यथा **अग्निमिंद्रं बृहस्पतिं विश्वांश्च देवानुपह्वये सरस्वतीं च वाजिनीं च वास्तु मे दत्तवाजिनः स्वाहा** इदमग्नये इंद्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाज्यै च **सर्पदेवजनान् सर्वान् हिमवंतंसुदर्शनं वसूंश्चरुद्रानादित्यानीशानं जगदैः सह एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा** इदं सर्पदेवजनेभ्योहिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च

**पूर्वाह्णमपराह्णं चोभौ मध्यंदिना सह प्रदोषमर्धरात्रं च व्युष्टां देवीमहापथां एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा** इदं पूर्वाह्णाय मध्यंदिनाय प्रदोषायार्द्धरात्राय व्युष्टायै देव्यै महापथायै च **कर्त्तारं च विकर्त्तारं विश्वकर्माणमोषधीश्च वनस्पतीन् एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा** इदं कर्त्रे विकर्त्रे विश्वकर्मणे ओषधीभ्योवनस्पतिभ्यश्च **धातारं च विधातारं निधीनां च पतिर्ठ सह एतान्सर्वान्प्रपद्येहं वास्तु मे दत्त वाजिनः स्वाहा** इदं ब्रह्मणे प्रजापतये सर्वभ्योदेवताभ्यश्च ततः स्थालीपाकेन स्विष्टकृद्धोमं निदध्यात् ततोमहाव्याहृत्यादि प्राजापत्यांतानवाज्याहुतीर्हुत्वा संस्रवप्राशनं ब्रह्मणे दक्षिणां दत्वा कांस्यपात्रे अनुपहते सक्षीराण्यौद पत्राणि द्रव्यं गोमयं दधि मधु घृतयवांश्च संभारान्कृत्वा आसनानि नागदंतादीनिउपस्थानानि प्रोक्ष्यदेवतास्थानानि तैः संभारैः अथ पूर्वे संधौ **श्रीश्च त्वा यशश्च पूर्वे संधौ गोपायेतां** इति मंत्रेण अभिमर्शनं करोति ततोदक्षिणे संधौ यज्ञस्य त्वा दक्षिणाश्च दक्षिणे संधौ गोपायेतामिति अनंतरं पश्चिमे संधौ अन्नं च त्वा ब्राह्मणाश्च पश्चिमे संधौ गोपायेतामिति अथोत्तरसंधौ ऊर्क्त्वा सूनृताश्चोत्तरे संधौ गोपायेतामिति अथ गृहान्निष्क्रम्य वक्ष्यमाणैः मंत्रैः यथालिंगंदिशउपतिष्ठते **केताचमासुकेताच पुरस्ताद्गोपायेतामित्यग्निर्वैकेतादित्यः सुकेता तौ प्रपद्य ताभ्यां नमोस्तु तौ मा पुरस्ताद्गोपायेतामिति** मंत्रेण प्राचीं दिशमुपस्थायाथ दक्षिणतः गोपायमानं च रक्षमाणा च दक्षिणतोगोपायेतामिति दक्षिणां दिशमुपस्थायाथ पश्चिमां दीदिविः **सहर्वै गोपायमानर्ठ रात्रीरक्षमाणा तौ प्रपद्ये ताभ्यां नमोस्तु ते मा दक्षिणतोगोपायेतामिति प्राणोजागृविस्तौ प्रपद्ये ताभ्यां नमोस्तु ते मा पश्चाद्गोपायेतामिति** मंत्रेणोपस्थाय अथोत्तरं **अस्वप्नश्च प्राणवद्रागश्चोत्तरतोगोपायेतामिति**

चंद्रमावा अस्वप्नोवायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोस्तु तौ मोत्तरतोगोपायेता मिति मंत्रेण उपतिष्ठते ततः समाप्तायां शालायां ज्योतिर्विदुपदिष्टे पुण्येहनि प्रवेशे नववेश्मन इति वचनात् मातृपूजाभ्युदयिके विधाय ब्राह्मणैः कृतस्वस्त्ययनोमंगलतूर्यगीतशांतिपाठेन सजलकलशो ब्राह्मणपुरःसरः शुक्लमाल्यानुलेपनस्तादृशसकलपुत्रपौत्रादिसमेतः सुशकुनसूचिताभ्युदयः तोरणाद्यां शालां द्वारेण प्रविशति धर्मस्थूणाराजश्रीस्तूपमहोरात्रे द्वारफलके इंद्रस्य ग्रहा वसुमंतो वरूथिनस्तानहं प्रपद्ये सह प्रजया सह पशुभिर्यन्मे किंचिदस्त्युपहतः सर्वगणः सखायः साधुसंवृतस्तां त्वा शालैरिष्टवीरान् गृहांतः संतु सर्वत इत्यनेन प्रविशेत् ततोब्राह्मणभोजनं ॥ इति शालाकर्म ॥

**अथातोमणिकावधानं ॥ १ ॥ उत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकांश्चान्यानि चाभिमंगलानि च तस्मिन् मिनोति मणिकं समुद्रोसीति ॥ २ ॥ अपआसिंचाति । आपोरेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च रायश्च स्थ स्थपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति ॥ ३ ॥ आपोहिष्ठेति च तिसृभिः ॥ ४ ॥ ततोब्राह्मणभोजनम् ॥ ५ ॥ ॥ ५ ॥**

अथातोमणिकावधानं ॥ अथ शालाकर्मानंतरं यतः शालायां मणिकेन भवितव्यं अतः मणिकावधानं व्याख्यास्यते ॥ उत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकांश्चान्यानि चाभिमंगलानि च तस्मिन्मिनोति मणिकं समुद्रोसीति॥ तत्र शालायां उत्तरपूर्वस्यां ऐशान्यां दिशि यूपवत् अभ्यादानपरि-

लेखपूर्वकमवटं मणिकबुध्नोवस्थानपर्याप्तं गर्तस्यखात्वा निखायांततः प्राचः पांसूनपोह्यावटस्योपरि प्रागग्रान् दीर्घान्कुशानास्तीर्य कृत्वा अक्षतान्यवान् अरिष्टकान् अरिष्टफलानि अन्यानि च मंगलानि शद्विवृद्धिसिद्धार्थकादीनि ओप्य चकारः समुच्चयार्थः तस्मिन्नवटे मणिकं उदकधानीं मिनोति स्थापयति समुद्रोसि नभस्वानार्द्रदानुः शंभूरित्येतावता मंत्रेण ॥ **अपआसिंचत्यापोरेवतीः क्षयथाहिवस्वः ऋतुं च भद्रं बिभृथामृतं चारायश्च स्थ स्वपसस्य पत्नीः सरस्वतीतद्गृणते वयोधादिति** ॥ तस्मिन्मणिके अपोउदकं नद्यादेः अशूद्राहृतं आसिंचति अपोरेवतीरितिमंत्रेण प्रक्षिपति ॥ **आपोहिष्ठेति च तिसृभिः** ॥ आपोहिष्टामयोभुवइत्यादिभिस्तिसृभिर्ऋग्भिः पुनर्मणिके सकृदपआसिंचति ॥ **ततोब्राह्मणभोजनम्** ॥ अथ पद्धतिः ततो मणिकावधाननिमित्तमातृपूजापूर्वकं आभ्युदयिकंश्राद्धंकृत्वाअग्नेरीशानप्रदेशे देवस्य त्वा सवितुः प्रसवेश्विनोबाहुभ्यां पूष्णोहस्ताभ्यां आददे नार्यसीति मंत्रेणाभ्रिमादाय इदमहर्ठ॰रक्षसां ग्रीवाअपि कृन्तामीत्यवटं भांडानुमानं परिलिख्य उदकस्पर्शं कृत्वा खात्वा प्रत्यचः पांसूनपास्य कुशानास्तीर्य अक्षतान् अरिष्टकान् ऋद्धिवृद्धिहरिद्रादुर्वादिमंगलद्रव्यं निक्षिप्य तदुपरि समुद्रोसि नभस्वानार्द्र दानुः शंभुरित्येतावता मंत्रेण मणिकमवटे अवधाय आपोरेवतीः क्षयथाहिवस्वः क्रतुं च भद्रं बिभृथामृतं च रायश्चस्थ स्थपत्यस्य पत्नी सरस्वती तद्गृणते वयोधाइत्यंतेन मंत्रेण आपोहिष्टामयोभुवइत्यादितृचेन च मणिके अपआसिंचति ब्राह्मणमेकं च भोजयेदिति मणिकावधानम् ॥

**अथातः शीर्षरोगभेषजं ॥ १ ॥ पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि जक्षुर्भ्यार्ठ॰श्रोत्राभ्यां गोदानाच्छुबुकादधि ॥ यक्ष्महर्ठ॰शीर्षण्यर्ठ॰रराटाद्विवृहामी**

**ममिति ॥ २ ॥ अर्धंचेदवभेदकाविरूपाक्षः श्वेतपक्षो-महायशाः॥ अथो चित्रपक्षः शिरोमास्याभिताप्सी-दिति॥ ३ ॥ क्षेम्योह्येवभवाति ॥ ४ ॥ ॥ ६ ॥**

**अथातः शीर्षरोगभेषजं** ॥ अथ मणिकावधानानंतरं शिरो-रोगवान् किंचित्कर्म कर्त्तुं न शक्नोति अतः शीर्षणि मूर्धनि रोगस्त-स्य भेषजं प्रतीकारः व्याख्यास्यते **पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि चक्षुर्भ्यांऽ श्रोत्राभ्यां गोदानाच्छुबुकादधियक्ष्मऽशीर्षण्यऽ ररा-टाद्विवृहामीममिति** ॥ यदि स्वस्य परस्य वा शिरसि पीडा भवति तत्र पाणी स्वकीयौ हस्तौ प्रक्षाल्य अद्भिरवनेनिज्य भ्रुवौ युगपत्ता-भ्यां पाणिभ्यां विमार्ष्टि प्रोक्षति अन्यस्य वा स्वयं करोति चक्षुर्भ्यां श्रोत्राभ्यां गोदानाच्छुबुकादधियक्ष्मऽ शीर्षऽ रराटाद्विवृहाममिमित्यने-नमंत्रेण **अर्द्धंचेदवभेदकविरूपाक्षः श्वेतपक्षोमहायशाः अथोचि-त्रपक्षः शिरोमास्याभिप्तासीरिति** ॥ अर्द्धं चेत् शीर्षं व्यथते तदा पूर्ववत् पाणी प्रक्षाल्य दक्षिणेन पाणिना यदि शिरसोदक्षिणभागे रुक् तदा दक्षिणं वामे वामं अवभेदकविरूपाक्षःश्वेतपक्षोमहायशाः अथो चित्रपक्षः शिरोमास्याभिताप्सीरित्यनेन मंत्रेण एकां भ्रुवं विमा-र्ष्टि ॥ **क्षेम्योह्येव भवति** ॥ हि स्फुटं एवं कृते क्षेम्यः शिरोरो-गरहित एव भवति ॥

**उतूलपरिमेहः ॥ १ ॥ स्वपतोजीव विषाणे स्वमूत्रमासिच्यापसलविर्त्त्रिः परिषिंचन्परीयात् परि-त्वागिरेरहंपरिमातुः परि स्वसुः परिपित्रोश्च भ्रा-त्रोश्च सखिभ्यो विसृजाम्यहम् ॥ उतूलपरिमीढो-सिपरिमीढःक्वगमिष्यसीति ॥ २ ॥ सयदि भ्रम्या-**

**दावाग्निमुपसमाधाय घृताक्तानि कुशेंड्वानि जुहु-यात् परित्वाह्वलनोह्वलनिवृत्तेन्द्रवीरुधः ॥ इन्द्र-पाशेन छित्वा मह्यमुक्त्वान्यमानयेदिति ॥ ३ ॥ क्षेम्योह्येव भवति ॥ ४ ॥ ७ ॥**

**उतूलपरिमेहः** उतूलस्य दुर्विनीतस्य दासस्य परिसमंतात् मेहः सेवनं वशीकरणं कर्म कथ्यते तथा **स्वपतो जीवविषाणे स्वं मूत्रमासिच्यापसवित्रिः परिषिंचन्परीयात्परित्वागिरेरहं परिमातुः परिस्वसुः परि पित्रोश्च भ्रात्रोश्च सखिभ्योविसृजाम्यहं उतूलपरिमीढोसि परिमीढः कगमिष्यसीति ॥** ततः सदासः यदा स्वपिति तदा गवादेः पशोर्जीवतः विषाणे शृंगे स्वं मूत्रं आसिच्य कृत्वा तस्य स्वपतः अपसलवित्रिः अप्रादक्षिणेन विषाणस्थं मूत्रं परिसमंतात् सिंचन् उक्षन् त्रिस्त्रीन्वारान्परीयात् परिभ्रमेत् परित्वा गिरेरहं परिमातुः परिस्वसुः परिपित्रोश्च भ्रात्रोश्च सखिभ्योविसृजाम्यहं उतूलपरिमीढोसि परिमीढः क गमिष्यसीत्यनेन मंत्रेण **सयदि भ्राम्यद्दावाग्निमुपसमाधाय घृताक्तानि कुशेंड्वादीनि जुहुयात् परित्वान्हलनोन्हलनिवृत्तेन्द्रवीरुधइंद्रपाशेन छित्वा मह्यमुक्त्वाऽथान्यमानयेदिति** सदासः यदि अस्मिन्कर्मणिकृतेपि भ्रम्यात् स्वेच्छया विचरेत्तदा तद्वश्यार्थमिदं कर्म कुर्यात् तथा पंचभूसंस्कारपूर्वकं दावाग्निं वनदहनं स्थापयित्वा ब्रह्मोपवेशनादि पर्युक्षणांते आघारावाज्यभागौ महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यस्विष्टकृदंताश्चतुर्दशाहुतीर्हुत्वा कुशेन्ड्वानि जुहुयात् कुशानां इन्ड्वानि कुंडलाकाराणि पत्राणि घृताक्तानि त्रीणि परित्वान्हलइत्यादिना अथान्यमानयेदित्यनेन मंत्रेण सकृदेव जुहुयात् इदमिंद्रायेति त्यागः ततः संस्रवप्राशनं ब्रह्मणे दक्षिणादानांतं कुर्यात् **क्षेम्योह्येव भवति**

अस्मिन् कर्मणि कृते हि स्फुटं क्षेम्यः वश्यः दासएव भवति संपद्येत ॥ इत्युतूलदासवश्यकर्म ॥

शूलगवः ॥ १ ॥ स्वर्ग्यः पशव्यः पुत्र्यो-धन्योयशस्यआयुष्यः ॥ २ ॥ औपासनमरण्यर्ठ-हृत्वा वितानर्ठ·साधयित्वा रौद्रं पशुमालभेत ॥ ३ ॥ साण्डं ॥ ४ ॥ गौर्वाशब्दात् ॥ ५ ॥ वपार्ठ·श्रपयित्वा स्थालीपाकमिश्राण्यवदानानि च रुद्रायवपामन्तरि-क्षायवसार्ठ·स्थालीपाकमिश्राण्यवदानानि जुहोत्यग्न-ये रुद्रायशर्वाय पशुपतये उग्रायाशनये भवायमहा-देवायेशानायेति ॥ ६ ॥ वनस्पतिः ॥ ७ ॥ स्विष्टकृ-दंते ॥ ८ ॥ दिग्व्याघारणं ॥ ९ ॥ व्याघारणांते पत्नीः संयाजयंतीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निंगृहपतिमिति ॥ १० ॥ लोहितंपलाशेषु रुद्राय सेनाभ्योबलिर्ठ·हरति यास्ते रुद्र पुरस्तात्से-नास्ताभ्यएषते बलिस्ताभ्यस्ते नमः यास्ते रुद्र दक्षिणत सेनास्ताभ्य एष बलिताभ्यस्ते नमःयास्ते रुद्र पश्चात्सेनास्ताभ्यएष बलिताभ्यस्ते नमःयास्ते रुद्रोत्तरतः सेनास्ताभ्यएष बलिस्ताभ्यस्ते नमः यास्ते रुद्रोपरिष्टात्सेनास्ताभ्यएषबलिस्ताभ्यस्ते नमः यास्ते रुद्राधस्तात्सेनास्ताभ्यएष बलिस्ता-

भ्यस्ते बलिस्ताभ्यस्ते नमइति ॥ ११ ॥ उवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधोवा निखनंति ॥ १२ ॥ अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वानुवाकाभ्यां ॥ १३ ॥ नैतस्य पशोर्ग्रामं हरंति ॥ १४ ॥ एतेनैव गोयज्ञोव्याख्यातः ॥१५॥ पायसेनानर्थलुप्तः ॥ १६ ॥ रसस्य तुल्यवयागौर्दक्षिणा ॥ १७ ॥ ॥ ८ ॥

॥ शूलगवः ॥ स्वर्ग्यः पशव्यः पुत्र्योधन्योयशस्यआयुष्यः अथ स्वर्गादिकामस्य शूलगवाख्यं कर्म यागविशेषमनुविधास्यन्नाह शूलगवइति सच स्वर्ग्यः स्वर्गायहितः पशव्यः पशुभ्योहितः पुत्र्यः पुत्रेभ्योहितः धन्यः धनाय हितः यशस्यः यशसे हितःआयुष्यः आयुषे हितः अयमर्थः यदा यजमानः स्वर्गपशुपुत्रधनयशआयुष्याद्यन्यतमकामोभवति तदाऽनेन शूलगवाख्येन यजेत अनेककामानां युगपदुत्पत्त्यसंभवात् औपासनमरण्यं हृत्वा तत्र वितानं त्रेताग्निविन्यासं साधयित्वा शुल्बोक्तप्रकारेण विरचय्य रुद्रं रुद्रोदेवता अस्येति रौद्रस्तं रौद्रं पशुं छागं आलभेत संज्ञपयति कथंभूतं सांडं सहअंडाभ्यां वर्त्ततइति अनपुंसकमित्यर्थः गौर्वा शब्दात् वाशब्दः पक्षव्यावृत्तौ नैव छागः पशूरौद्रः अपि तु सांडोगौःकुतः शब्दात् शूलगवइत्येतस्माच्छब्दात् वपां श्रपयित्वा स्थालीपाकमिश्राण्यवदानानिच रुद्राय वपामंतरिक्षायवसां स्थालीपाकमवदानानि जुहोति अग्नयं इत्यादि वपां पक्त्वा स्थालीपाकं अवदानानि च हृदयादीनि सहैव श्रपयित्वा मनु पशुतंत्रे विहृत्य शामित्रेग्नौऽवदानं श्रपणं वपाश्रपणं चाहवनीये दृष्टं अत्र तन्माभूदिव वपां श्रपयित्वा

स्थालीपाकमिश्राण्यवदानानि सह श्रपणमुच्यते **रुद्राय वपामंतरिक्षाय वसां** तत्र रुद्राय वपां जुहोति अंतरिक्षाय वसां जुहोत्यध्याहारः **स्थालीपाकमिश्राण्यवदानानि** जुहोत्यग्नयइत्यादि अवदानहोमावसरे हृदयादीन्यवदानानि स्थालीपाकेन चरुणा मिश्राणि संयुतानि जुहोति अग्नौ प्रक्षिपति नवकृत्वअग्नये स्वाहेत्यादिभिर्वक्ष्यमाणैर्नवभिर्मंत्रैः ॥ **अग्नये रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवाय ईशानायेति वनस्पतिस्विष्टकृदंते दिग्व्याघारणं** ॥ वनस्पतिश्च स्विष्टकृच्च वनस्पतिस्विष्टकृतौ तयोर्वनस्पतिस्विष्टकृतोरंते व्याघारणं कर्त्तव्यं तत्र व्याघारणं दिशां वसया कुर्यात् तत्र वनस्पतिहोमः स्विष्टकृद्धोमादर्वाक् पृषदाज्येन भवति पशौ तथादृष्टत्वात् स्विष्टकृद्धोमश्च सर्वावदानपक्षे त्र्यंगेभ्यः असर्वावदानपक्षे त्र्यंगेभ्यएवावशिष्टेभ्यः अत्र सूत्रे व्याघारणमेव निबद्धं तत्र द्रव्यदेवतापेक्षायां सर्वपशुप्रकृति भूताग्नीषोमीये दर्शनात् वसाद्रव्यं दिशोदेवव्याघारणधर्मतया लभ्यते **व्याघारणांते पत्नीः संयाजयंतीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्याअग्निं गृहपतिमिति** व्याघारणस्य दिशामभिघारणस्य अंतेऽवसाने पत्नीः पंचवक्ष्यमाणाः संयाजयंति जायापत्यापश्वंगेन कथं इन्द्राण्याइत्यादिभिः पंचभिर्मंत्रैः स्वाहाकारांतैः प्रतिमंत्रं **लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो-बलिर्ठं·हरति यास्ते रुद्रेत्यादि** ततोमहाव्याहृत्यादि होमांते लोहितं तस्यैव पशोरुधिरं पालाशेषु पलाशपत्रेषु कूर्चेषु आसनेषु प्राक्संस्थेषु उदक्संस्थेषु वा रुद्राय सेनाभ्यः रुद्राय देवतायै सेनारुद्राय सेनाः अलुक्समासः ताभ्योबलिमुपहारं हरति ददाति यास्तइत्यादिभिः षड्भिर्मंत्रैः षट्सु पलाशकूर्चेषु प्रतिमंत्रं प्रत्येकं **उवध्यं लोहितलिप्तमग्नौ प्रास्यति अधोवा निखनति** उवध्यं पुरीषाधानी पोटीतिप्रसिद्धं लोहितेन रक्तेन लिप्तं संसृष्टं लोहितलिप्तं अग्नौ आहवनीये प्रास्यति प्रक्षिपति वा अधः भूमौ निखनति निदधाति **अनुवातं पशुमव-**

**स्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां** अनुवातमनुलक्षीकृत्य वाताभिमुखमित्यर्थः पशुं अवशिष्टं पशुशरीरं अवस्थाप्य निधाय रुद्रैर्नमस्तइत्यध्यायेनाम्नातैः उपतिष्ठते यद्वा प्रथमोत्तमाभ्यां मंत्रसमुदायाभ्यां प्रथमोनुवाकः नमस्तइत्यारभ्य षोडशर्च्चः उत्तमोअंतिमः द्रापे अंधसस्पतइत्यारभ्य विंशतिकंडिकात्मकः **नैतस्य पशोर्ग्रामं हरति** एतस्यरौद्रस्य पशोर्मांसं ग्रामं न हरंति ग्रामं प्रति न नयंति याज्ञिकाः किं तु अरण्यएवोत्सृजंति **एतेनैव गोयज्ञोव्याख्यातः** एतेनैव शूलगवोऽनेनैव गोयज्ञोगोयज्ञनामधेयोयागः व्याख्यातः कथितः तत्र द्रव्यविशेषमाह **पायसेनानर्थलुप्तः** पायसेन पयसा संसिद्धेन चरुणा अनर्थलुप्तः शूलगवप्रधानदेवताहोमलोपरहितः **तस्य तुल्यवयागौर्दक्षिणा** तस्य पशोः तुल्यवया शूलगवपशोः वयसा तुल्यं समं वयोजन्मातिक्रांतकालोयस्य गौः सतुल्यवयागोपुंगवः दक्षिणा परिक्रयद्रव्यं ब्रह्मणे देयमिति सूत्रार्थः ॥ अथप्रयोगः॥ स्वर्गपशुपुत्रधनयशआयुष्कामानां शूलगवपशुबंधोविहितः तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा औपासनाग्निमादायारण्यं गच्छेत् तत्र शुचौ देशे गार्हपत्यायतनं सप्तविंशत्यंगुल्यं वृत्तं विधाय तन्मध्यनिखातशंकोः अष्टौ एकादश द्वादश वा स्वकीयानि पदानि प्राचीं गत्वा तदंते शंकुं निखाय तयोः शंक्वोः उभयतःपाशां रज्जुं प्रसार्याहवनीयायतनं रचयेत् तद्यथा “ यावत्प्रमाणा रज्जुः स्यात्तावानैवागमोभवेत् । आगमार्द्धे च शंकुःस्या त्तदर्द्धे च निरंछनमिति ” शुल्बवचनानुसारेण अत्रायं रचनाप्रकारः पूर्वस्माच्छंकोः द्वादशांगुष्टपर्वपरिमितं देशं पूर्वतः पश्चिमतश्च परित्यज्य तत्र शंकुद्वयं निखाय चतुर्विंशत्यंगुलां रज्जुं परिमाय तावतीमेवमधिकां गृहीत्वा उभयतः पाशौ कृत्वा रज्जोरागमार्धे शंकुस्थानं सूत्रादिनांकयित्वा अपरागमार्द्धे निरंछनं आकर्षणसूत्रगुणमोप्य पूर्वार्द्धापरार्द्धयोः शंक्वोः तस्यारज्वाः

पाशद्वयं निक्षिप्य निरंछेन गुणेन दक्षिणतआकृष्य शंकुस्थाने शंकुं निखाय पुनस्तामेव रज्जुमुत्तरतोनीत्वा तथैवाकृष्य शंकुस्थाने अपरं शंकुं निहन्यात् अथ रज्वाः पाशौ परिवर्त्य पूर्ववत् निरंछनगुणेन दक्षिणतआकृष्य शंकुस्थाने शंकुं निखाय पुनस्तामेव रज्जुमुत्तरतोनी-त्वा तथैवाकृष्य शंकुस्थाने शंकुं निहन्यात् एवं चतुरस्रं चतुर्विंश-त्यंगुलायामविस्तारमाहवनीयायतनं संपद्यते ततोगार्हपत्याहवनीयां-तरालसंमितां रज्जुं षड्गुणां सप्तगुणां वा विधाय षष्ठांशं सप्तमं वा तत्राधिकं निक्षिप्य प्रसार्य त्रिगुणीकृत्य अपरवितृतीये शंकुस्थानज्ञा-नार्थमंकयित्वा गार्हपत्याहवनीयमध्यगतयोः शंकोः पाशौ प्रतिमुच्य गार्हपत्यायतनात्दक्षिणतआकृष्य अपरवितृतीयके शंकुं निखाय त-स्मिन्शंकौ अन्यरज्जुपाशं प्रतिमुच्य षोडशांगुलानि परिमाय वृत्त-मंडलं विरच्य तन्मध्यशंकोश्चत्वार्यंगुलान्युत्तरतः परित्यज्य तत्र पूर्वा-परायतां मंडलसंमितां रज्जुं निपात्य रेषामुल्लिखेत् एवं धनुराकृतिदक्षि-णाग्न्यायतनं संपद्यते अथ तामेव रज्जुं परिवर्त्य आहवनीयादुत्तरतः वितृतीयेनाकृष्य वितृतीयस्थाने उत्करं कुर्यात् एवं वितानं साधयित्वा तेषु पंचभूसंस्कारान्कृत्वा गार्हपत्यायतने औपासनाग्निं स्थापयित्वा मृन्मयेन पात्रेण गार्हपत्यैकदेशमादायाहवनीयायतने आहवनीयं प्रणयेत् ततः एवमेव दक्षिणाग्निरवरे दक्षिणाग्निं आहवनीयस्य दक्षि-णतोब्रह्मासनमास्तीर्य शूलगवेन रौद्रेण पशुनाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति ब्राह्मणं प्रार्थ्य भवामीति तेनोक्तः आसने तं उपवेश्य उत्तरतः प्रणीताः प्रणीय पवित्रच्छेदनादि पवित्रे प्रोक्षणीपात्रं वज्रं अंतर्द्धानतृणं इत्येतानि पंच आसादयेत् ततः रज्जुं शंकुं शम्यां अग्निं पुरीषाहरणं उदकं सिकताः आच्छादनवस्त्रं इत्यष्टौ उपकल्पयेत् ततः पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य वज्रमंतर्द्धानतृणं च प्रोक्ष्य प्रोक्षणीं निधाय वस्त्रमादाय वेदीं मिमीते स्फ्येन आहवनीयस्य दक्षिणतः

प्राचीं त्र्यरत्निं पश्चिमतश्चतुरत्निं उत्तरतस्त्र्यरत्निं पूर्वतश्च त्र्यरत्निं एवं परिमितां वेदिं त्रिभिः कुशैः परिसमुह्य उत्तरतोवज्रेणोत्करं परिलिख्य तदंतिके वज्रं निधाय तदुपरि वेदितृणं कृत्वा सतृणं वज्रमादाय दक्षिणहस्तेन सव्येपाणावाधायदक्षिणेनालभ्य तेन वज्रेण पृथिवीमात्मानं वा संस्पृशन् वेद्यामुदगग्रं निधाय तदुपरि वेदितृणं कृत्वा सतृणं वज्रमादायदक्षिणहस्तेन सव्ये पाणावाधाय दक्षिणेनालभ्य तेन वज्रेण पृथिवीमात्मानं वा संस्पृशन् वेद्यामुदगग्रं निधाय तदुपरि तेन प्रहृत्य तदग्रेण पुरीषमादाय वेदिं प्रेक्ष्य पुरीषमुत्करे कृत्वा पुनस्तथैव प्रहृत्य पुरीषमादाय वेदिं प्रेक्ष्यामुं पुरीषमुत्करे करोति एवमेव द्वितीयं करोति पुरीषकरणांते दक्षिणोत्तराभ्यां पाणिभ्यां उत्करेभिन्यासं करोति ततस्तृतीयं प्रहरणादि चतुर्थं कृत्वा ब्रह्मन् पूर्वं परिग्रहं परीग्रहीष्यामीत्यामंत्रितेन ब्रह्मणा परिग्रहाणेत्यनुज्ञातः स्फ्येन वेदीं दक्षिणतः प्राचीं पश्चिमतः उदीचीं उत्तरतः प्राचीं परिगृह्णाति अथ वेद्यां प्राचीस्तिस्रोलेखाउल्लिख्य अनामिकांगुष्ठाभ्यां दक्षिणाप्रभृतिभ्योलेखाभ्यः पृथक् पृथक् पुरीषमादायोत्करे प्रक्षिप्य क्रमेण लेखाः संमृशति तत्रैते वेदिमानादिपदार्थाः स्वयंकर्त्तृकाः मंत्ररहिताश्च ऋत्विगंतरात्समाम्नायाभावाच्च अथाहवनीयस्य पुरस्तादुत्तरवेदिस्थाने पंचभूसंस्कारान्कृत्वा पूर्वार्द्धे शंकुं निखाय द्वात्रिंशदंगुलं शम्यामादाय चतुरस्रां उत्तरवेदिं शम्यामात्रीं मिमीते ततस्तथैव शम्यायां उत्तरतश्चात्वालं मिमीते तद्यथा पश्चादुदीचीं शम्यांनिपात्य लेखामुल्लिखेत् पुरस्तात्स्फ्येन तावतीलेखामुल्लिख्य तथैव दक्षिणतः प्राचीमुत्तरतः प्राचीं शम्यां निपात्य रेखा उल्लिखेत् उदीची शम्यां निपात्य एवं चतुरस्रशम्याप्रमाणं चात्वालं संपद्यते ततश्चात्वालमध्ये स्फ्याग्रेण प्रहृत्य पुरीषमादाय उत्तरवेदौ शंकुसमीपे प्रक्षिप्य अभिन्यासं निधाय पुनरेवं द्विरपरं प्रहृत्य पुरीषमादायोत्तरवेदिपुरीषप्रक्षेपातिन्यासा-

न्कृत्वा चतुर्थवेलायां अभ्र्याचात्वालंखात्वा यावता पुरुषेण शम्यामात्रीउत्तरवेदिः ऊर्ध्वापूर्यते तावत्पुरीषाहरणेन चात्वालादादाय प्रक्षिपेत् एवमुत्तरवेदिं रचयित्वा मध्ये प्रादेशमात्रीं चतुरस्त्रां नाभिं कृत्वा प्रोक्षणीभिः प्रोक्ष्य सिकतामुपकीर्य वाससाच्छादयति अथ गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य पंचगृहीतं गृहीत्वा आज्यप्रोक्षण्याहवनीयसोपयमनीकाधिशुष्मस्थाग्नीनुद्यम्य उत्तरवेदिसमीपं गत्वा पुरस्तात्पश्चाद्दक्षिणतउत्तरतश्चोत्तरवेदिं प्रोक्षणीभिः प्रोक्ष्य प्रोक्षणीशेषमुत्तरवेदेः आग्नेयकोणसमीपे बहिर्वेदीं निनीय पंचगृहीतेन नाभिं व्याघारयति कोणे हिरण्यं पश्यन् यथापूर्वंदक्षिणस्यां स्त्रक्त्यां आघार्योत्तरापरस्यां ततोदक्षिणापरस्यां ततः पूर्वोत्तरस्यां मध्येऽवघार्य शेषमाज्यं स्त्रुवमुद्यम्योर्ध्वमुत्क्षिपति ततोनाभिं पौतुद्रवैः परिधिः परिदधाति यथा प्रथमं उदगग्रेण पश्चिमतः ततः प्रागग्रेणोत्तरतः ततोनाभिमध्ये गुग्गुलुं सुगंधि तेजनं वृष्णेस्तुकाःशीर्षवन्याः अभावेऽन्यानि दधाति तदुपरि यउपयमनीगतमग्निं स्थापयति उपयमनीं तत्समीपे निवपति चात्वाले प्रणीयमानमग्निं ब्रह्मानुगच्छति ततोयजमानः प्रणीताउत्तरवेदेः उत्तरेण कुशासने प्रणीयाहवनीयं परिस्तीर्य गार्हपत्यं च पात्राण्यासादयति आज्यस्थालीसंमार्गकुशाः सन्नहनावच्छादनानि परिधाय उपयमनकुशाः समिधः स्त्रुवः आज्यं वपाश्रपण्यौ चरुस्थालीशूलं उखा तंडुलाः दक्षिणार्थंतुल्यवयागौश्चेति उपकल्पनीयान्युपकल्पयति बर्हिः प्लक्षशाखा पलाशशाखा त्रिगुणंरशना उपाकरणंत्रिगुणं द्विगुणरशनागोपशुः असिः पात्रेजनिः दधिहिरण्यशकलानि षट् पलाशपत्राणि चेति ततः आसादनक्रमेण पात्रेण पात्राणि प्रोक्षति रुद्राय त्वा जुष्टं प्रोक्षामीति तंडुलान्प्रोक्षति आज्यस्थाल्यामाज्यं निरूप्य गार्हपत्येऽधिश्रित्य पर्यग्निं कुर्यात् ततोवेदिं मध्यसंग्रहीतां अभ्र्या खात्वाब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामीति ब्रह्माणमामंत्र्य परिग्रहाणे

ति तेन अनुज्ञातःपूर्ववत्स्फ्येन दक्षिणपश्चिमोत्तरतोवेदिं परिगृह्याऽ नुमार्ष्टि आहवनीयमपरेण प्रोक्षणीरासाद्य प्रणीतोदकेन पाणी अवनिज्य प्रणीतां पश्चिमतः प्रागग्रं स्फ्यं निधाय तदुपरि इध्माबर्हिषी आसादयति ततः स्रुवं प्रथमं संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् आज्यमुद्वास्याप्रोक्षणीनामपरेण कृत्वा उत्पूयावेक्ष्य प्रोक्षण्येकदेशेन बर्हिर्मूलानि सित्काबर्हिर्विस्रस्य संनहनं च विस्रस्य दक्षिणस्यां वेदिश्रोणौ निधाय संहननावच्छादनैरवच्छाद्य वेदिं स्तृणाति तद्यथा बर्हिःपूलकं त्रिधा विभज्य प्रथमं भागं दक्षिणेनोत्थाप्यांके कृत्वा हि द्वितीयं भागं दक्षिणेनोत्थापितं सव्येन संगृह्य अंकस्थितं प्रथमभागं दक्षिणेनादाय वेद्यां स्तृणान्युदक्संस्थं तथैव तृतीयं भागं गृहीत्वा अंके कृत्वा सव्यथितं दक्षिणेनादाय अंकगतं सव्येन संगृह्य पूर्वस्तृतबर्हिर्मूलानि द्वितीयबर्हिर्भागाग्रैश्छादयन् स्तृत्वा तृतीयभागं दक्षिणेनादाय स्फ्योपग्रहेण तथैव तृणाति पश्चादपवर्गं ततउपरिप्लक्षशाखास्तृणाति अथाहवनीयं कल्पयति ततो मध्यमदक्षिणोत्तरान्परिधीन् आहवनीये परिधाय आहवनीयमवेक्ष्य अग्रेणाहवनीयं परीत्य पलाशशाखां निखनति तां त्रिगुणरशनया त्रिः परिव्ययति तत्र शकलमुपगूहति रुद्राय त्वोपाकरोमीत्युपाकरणतृणेन पशुमुपाकरोति ततो द्विगुणरशनयांतराशृंगं पशुं बध्वा रुद्राय नियुनज्मीति शाखायां नियुनक्ति अथ रुद्राय त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षणीभिः प्रोक्ष्य शेषं आस्य उपगृह्य अधस्तादुपोक्षति ततउपयमनकुशानादाय समिधोऽभ्याधाय प्रोक्षणीभिः पर्युक्ष्य पुर्वाघारमाघार्य उत्तरांते स्रुवाग्रेणाललाटांसश्रोणिषु पशुं समनक्ति ततः चात्वाले स्वर्वसिभ्यां पशोर्ललाटमुपस्पृशति स्वरुममवगूह्य असिं एकतः घृतेनाभ्यज्य निदधात् अथाहवनीयस्योत्तरतः स्फ्येन शामित्राय परिलिख्य आहवनीयस्योल्मुकेन पश्चाज्यशामित्रदेशशाखाचात्वालाहवनीयान् पर्यग्निं कुर्यास्त्रिः उल्मु-

कमाहवनीये प्रक्षिप्य तावत्प्रतिगच्छेत् पुनराहवनीयादुल्मुकमादाय पशुं कंठे बध्वा वपाश्रपणीभ्यामन्वारभ्य उद्गच्छेत् तत्र वेदितृण-द्वयमादाय शामित्रे उल्मुकं निधाय शामित्रस्य पश्चात् एकं तृणं आस्तीर्य तत्र पशुं प्राक्शिरसं प्रत्यक्शिरसं उदक्पादं निपात्य अवाश्यमानं मुखं संगृह्य तमनेन शामित्रेण संज्ञपयति सत्यन्यस्मिन् पुरुषे शमितरि यजमानआहवनीयं प्रत्येत्य पूर्णाहुतिवदाज्यं संस्कृत्य स्वाहा संज्ञप्ते पशौ देवेभ्यः स्वाहेति तेनैवाज्येन अपरां हुत्वा तूष्णीमपराः पंच जुहोति अथ वपाश्रपणीभ्यां नियोजनीयं चात्वाले प्राश्य पात्रेजनीभिः पशोः प्राणशोधनं स्वयमेव करोति यथा मुखं नासिके चक्षुषी द्वे कर्णौ द्वौ नाभिं मेढ्रं पायुं संहत्य पादान् एकैकं पात्रेजनीजलेन स्पृशति शेषेण शिरःप्रभृति मुखनासिके प्रभृति कर्णपर्यंतं पुनस्तथैवाप्याय्य ततोंगानि निषिच्य शेषं पशोः पश्चाद्भागे निषिंचति ततउत्तानं पशुं कृत्वा नाभ्यग्रे तृणं निधाय प्रज्ञातया ऽसिधारयाभिनिधाय तृणणां त्वचं छित्वा तृणमूलं उभय-तोलोहितेनाङ्क्त्वातृणं भूमौ निरस्य तदुपरि स्वयं पादौ कृत्वा पुनरागत्योपविश्य वपामुत्खिद्य वपाश्रपणीभ्यां प्रोर्णूय सित्वाऽज्ये-नाभिघार्य प्रक्षाल्य पशुं विशास्ति हृदयादीनि सर्वाणि त्रीणि वा यथाकामं अवदानान्यवद्य जाघनीं चावद्य श्वभ्रे उपहृत्यामवधाय लोहितं चावधाय चरौ तंडुलानोप्य वपां शामित्रे प्रतप्य आहव-नीयस्योत्तरतः स्थित्वाऽहवनीये च प्रतप्य शाखाग्न्योरंतरेणाहृत्य दक्षिणतः स्थित्वा स्रुवेणाज्येनाभिघारयन् श्रपयति गार्हपत्ये स्थालीपाकं शामित्रे हृदयादीनि अवदानानि चरुं च तत्र हृदयं शूलं चरुं पर्यग्नि कृत्वा वपामभिघारयति अथ त्रिः प्रच्युते पशौ हृदयं उपरि कृत्वा पृषदाज्येन हृदयान्यवघार्य इतरान्यवदानान्याज्येन सर्वाणि चत्र्यगंव-र्जमभिघार्य स्थालीपाकमुद्वास्य अनंतरमुखां वपाया अंगानां च प्राणादानं

कृत्वा वपादीनि क्रमेणासाद्य अंगानि शाखाग्न्योरंतरेणाहृत्य वेद्यामासाद्य वपामवदानानि चालभ्य ब्रह्मणाऽन्वारब्धआज्यभागौ हुत्वा वपाहोमाय स्रुवे आज्यमपस्तीर्य हिरण्यमवधार्य वपां गृहीत्वा पुनर्हिरण्यशकलं दत्वा द्विरभिघार्य रुद्राय स्वाहेति वपां जुहोति वपाश्रपण्यौ चाग्नौ प्रास्यति ततउखातोवसां गृहीत्वा अंतरिक्षाय स्वाहेति जुहुयात् अथावदानहोमार्थं स्रुवे उपस्तीर्य हिरण्यशकलमवधाय हृदयाद्यंगेभ्यः प्रत्येकं द्विर्द्विरवदायावदाय स्रुवे क्षिप्त्वा उपरि हिरण्यशकलं दत्वा सकृदभिघार्य असर्वाणिचेक्षताभ्यंगं कृत्वा अग्नये स्वाहेति जुहोति एवं पुनः स्रुवे उपस्तरणहिरण्यशकलावधानद्विर्द्विरवदानग्रहणसकृत्स्थालीपाकावदानधारणानि कृत्वा रुद्राय सर्वाय पशुपतये उग्राय अशनये महादेवाय ईशानायेत्येतैर्नाममंत्रैः स्वाहाकारांतैः एकैकस्मै जुहोति एवं नवप्रधानहोमाः संपद्यंते ततः पृषदाज्येन वनस्पतये स्वाहेति होमं विधाय स्विष्टकृद्धोमार्थं स्रुवमुपस्तीर्य हिरण्यशकलं दत्वासर्वावदानपक्षे तेभ्यएव प्रधानार्थेभ्योद्विर्द्विरवदाय सकृच्चरोरवदाय हिरण्यशकलमवधाय द्विरभिघार्याग्नये स्विष्टकृते स्वाहेत्यग्नये उत्तरप्रदेशे जुहुयात् ततः स्रुवेण वसां गृहीत्वा हवनीयस्य पुरस्तात् दिशः स्वाहा इदं दिग्भ्यः दक्षिणतः प्रदिशः स्वाहा इदं प्रदिग्भ्यः पश्चिमतः आदिशः स्वाहा इदमादिग्भ्यः उत्तरतः विदिशः स्वाहा इदं विदिशः स्वाहा इदं विदिग्भ्यः मध्यतः उदिशः स्वाहा इदमुदिग्भ्यः जाघनीं गृहीत्वा गार्हपत्यं प्रत्येत्य जाघन्याः स्रुवेणावदायावदाय इंद्राण्यै स्वाहा इदमिंद्राण्यै रुद्राण्यै स्वाहा इदं रुद्राण्यै शर्वाण्यै स्वाहा इदं शर्वाण्यै भवान्यै स्वाहा इदं भवान्यै अग्नये गृहपतये स्वाहा इदमग्नये गृहपतये एताः पंचपत्नीसंयाजाहुतीर्जुहुयात् ततः आहवनीये महाव्याहृत्यादि प्राजापत्यहोमांते संस्रवप्राशनानंतरं शूलगवपशुना तुल्यवयसं गां ब्रह्मणे दक्षिणां दद्यात् ततः

पलाशपत्रेषु षट्सु प्राक्संस्थेषु उदक्संस्थेषु वा पशुलोहितेन **यास्ते रुद्रपुरस्तात्सेनास्ताभ्यएवबलिस्ताभ्यस्ते नमः** इदं रुद्राय सेनाभ्यइति सर्वबलिषु त्यागः एवं **यास्ते रुद्रदक्षिणतः सेनास्ताभ्यएषबलिस्ताभ्यस्ते नमः** इदं रुद्राय सेनाभ्यः **यास्ते रुद्र पश्चात्सेनास्ताभ्यएषबलिस्ताभ्यस्ते नमः** इदं रुद्राय सेनाभ्यः **यास्ते रुद्रोपरिष्टात्सेनास्ताभ्यएषबलिस्ते नमः** इदं रुद्राय सेनाभ्यः **यास्ते रुद्राधस्तात्सेनास्ताभ्यएषबलिस्ताभ्यस्ते नमः** इदं रुद्राय सेनाभ्यः ऊवध्यस्य लोहितलिप्तस्याग्नौ प्रक्षेपः अधोनिखननं वा कृत्वा अनुवातं पशुमवस्थाप्य रुद्राध्यायेन नमस्तइत्यादिना प्रथमोक्ताभ्यां वानुवाकाभ्यां रुद्रानुपस्थाय उदमुपस्पृशेत् एतस्य पशोर्मांसं ग्रामं नानयेत् समाप्तः शूलगवः ॥ अथ गोयज्ञपद्धतिः ॥ तत्र विहितमातृपूजाभ्युदयिकः स्वर्गपशुपुत्रधनयशआयुषफलानामन्यतमफलकामः औपासनमरण्यं नीत्वा तत्र परिसमूहनादिभिः संस्कृतायां भूमौ स्थापयेत् ततोब्रह्मोपवेशनांते विशेषः सक्षीरं प्रणयनं कृत्वा पायसं श्रपयित्वा आज्यभागाविष्ट्वा शूलगवदेवताभ्यअग्निरुद्रसर्वपशुपत्युग्रेशानभवमहादेवे मनोभ्यः स्वाहाकारांतैर्नामभिश्चतुर्थ्यंतैर्नवभिर्मंत्रैः पायसेन प्रत्येकं जुहुयात् ततः स्विष्टकृदादिप्राजापत्यहोमांते संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दद्यात् ॥ इतिगोयज्ञपद्धतिः ॥

**अथवृषोत्सर्गः ॥ १ ॥ गोयज्ञेन व्याख्यातः ॥ २ ॥ कार्त्तिक्यां पौर्णमास्याᳬं रेवत्यां व्वाश्वयुजस्य ॥ ३ ॥ मध्ये गवाᳬं सुसमिद्धमग्निं कृत्वाज्यᳬं सᳬं स्कृत्येह रतिरिति षट्जुहोति ॥ ४ ॥ पूषागा अन्वेतु नः पूषा रक्षतु सर्व्वतः ॥ पूषा व्वाजᳬं सनोतु**

न इति पौष्णस्य जुहोति ॥ ५ ॥ रुद्रांजपित्वैकवर्णं द्विवर्णं वायोर्वा यूथं छादयति यं वा यूथं छादये-द्रोहितोवै व स्यात्सर्वांगैरुपेतोजीववत्सायाः पय-स्विन्याः पुत्रोयूथे च रूपवत्तमः स्यात्तमलंकृत्य यूथे मुख्याश्वतस्रोवत्सतर्यस्ताश्चालंकृत्य एतं युवा-नं पतिं वोददामि तेन क्रीडंती श्चरत प्रियेण ॥ मानः साप्तजनुषा सुभगा रायस्पोषेण समिषा-मदेमेत्येतयैवोत्सृजेरन् ॥ ६ ॥ नाभ्यस्थमभिमं-त्रयते मयोभूरित्यनुवाकशेषेण ॥ ७ ॥ सर्वासां पयसि पायसठं॑श्रपयित्वा ब्राह्मणान्भोजयेत् ॥ ८ ॥ पशुमप्येकेकुर्वंति ॥ ९ ॥ तस्य शूलगवेन कल्पोव्याख्यातः ॥ १० ॥ ९ ॥

अथ वृषोत्सर्गः अथ शूलगवानंतरं वृषोत्सर्गः वृषस्य वक्ष्यमाणलक्षणस्य उत्सर्गः उत्सर्जनं व्याख्यास्यते सच कामाधिका-रात् फलस्य वानभिधानात् किं विश्वजिन्न्यायेन सर्गः फलं कथ्यते उत पूर्व्वोक्तशूलगवानंतराभिधानात्तत्फलमिति संदेहः तत्र विश्वजि-त्प्राप्त्य सर्वथा श्रुतफलकर्मविषयत्वात् नात्र प्रवृत्तिः कुतः सन्निधि-श्रुतस्य शूलगवफलस्य स्वर्गादेः स्वान्वययोग्यत्वात् तस्मात् अयमपि पशुः स्वर्गपशुपुत्रधनयशआयुष्कामस्यैवेत्यभिप्रेत्याह **गोयज्ञेन व्या-ख्यातः** सच गोयज्ञेन गवा रौद्रेण पशुना यज्ञः गोयज्ञः तेन व्याख्यातः गोयज्ञफलेतिकर्त्तव्यतामित्यर्थः ततश्चास्मिन्नपि स्वर्ग-पशुपुत्रधनयशआयुष्कामस्याधिकारः सकदा कर्त्तव्यइत्यपेक्षायामाह

**कार्त्तिक्यां पौर्णमास्यां** आश्विनस्य **रेवत्यां** रेवतीनक्षत्रे वा कर्त्तव्यः शास्त्रांतरात्तु चैत्र्यमाश्वयुज्यं वा **मध्ये गवाᳫं सुसमिद्धमग्निं कृत्वाज्यᳫं संस्कृत्येहरतिः** षट् जुहोति प्रतिमंत्रं मध्येगवं गोष्ठे पंचभूसंस्कारपूर्वकं आवसथ्याग्निं सुसमिद्धं प्रज्वलितं कृत्वा आज्यसंस्कारानंतरं पर्युक्षणांते इहरतिरित्यादिभिः वन्हिमंत्रैः प्रतिमंत्रं षडाज्याहुतीर्जुहोति अत्र मध्येगवमिति देशविशेषनियमानुविधानात् देशांतरस्येह यागानंगत्वं **पूषागा अन्वेतु नः पूषा रक्षतु सर्वतःपूषा वाजᳫं सनोतु नः स्वाहेति पौष्णस्य जुहोति** पूषा देवताऽस्येति पौष्णः चरुः तस्य पूषागाइत्यादिमंत्रेण जुहोति होमसंख्यानभिधानात्सकृत्श्रपणानुपदेशात्सिद्ध एवोपादीयते अयं पौष्णः चरुः पिष्टमयोभवति कुतः तस्माद्यं पूष्णे चरुं कुर्वते प्रपिष्टानामेव कुतः श्रुतेः **रुद्रान् जपित्वैकवर्णं द्विवर्णं वा योवा यूथं छादयति यं वा यूथं छादयेद्रोहितोवैव स्यात्सर्वांगैरुपेतोजीववत्सायाः पयस्विन्याः पुत्रोयूथे च रुपवत्तमः स्यात्तमलंकृत्य यूथे मुख्याः चतस्रोवत्सतर्यस्ताश्चालंकृत्यैतं युवानं पतिं वोददामि तेन क्रीडंती श्चरत प्रियेण मानः साप्तजनुषासुभागारायस्पोषेण समिषामदेमेत्येतयैवोत्सृजेरन्** रुद्रान्नमस्तइत्यध्यायाम्नातान् जपित्वा सप्तजन्मजपधर्मेण पठित्वा अत्र शूलगातिदेशप्राप्तोपि रुद्रजपविधिः प्रथमोत्तमानुवाकजपविकल्पनिवृत्त्यर्थः जपावसरज्ञापनार्थोवा तन्न अपूर्वश्चायं जप्यत्वेनाप्राप्तत्वात् आकृतौ हि रुद्राणां शूलगवस्थाने करणत्वे त्वविहितत्वात् एकएव शुक्लादिवर्णोरूपं यस्यसएकवर्णः तं अथ वा द्वौ वर्णौ यस्यसद्विवर्णः विशेषनियममभिधाय अथ वृषस्य परिमाणविशेषनियममाह योवृषः यूथं कृत्स्नं वर्गं छादयति स्वपरिमाणेन अधः करोति वा यं वृषं यूथवर्गः छादयेत् अधः करोति तं वा यूथादधिकपरिमाणं वा न्यूनपरिमाणं वेत्यर्थः रोहितः

लोहितोवा एव स्यात् एवकारेण लोहितस्य एकवर्णद्विवर्णाभ्यां प्राशस्त्यमुच्यते पुनः कीदृक् सर्वैः अंगैः उपेतः समन्वितः न पुनः हीनांगः अधिकांगोवा तथा जीवाः प्राणवंतोवत्साः प्रसूतिर्यस्याः साजीववत्सा तस्यागोः तथा पयः बहुक्षीरं विद्यते यस्याः सा पयस्विनी तस्याः बहुक्षीरायाइत्यर्थः तथा यूथे वर्गविषये रूपमस्यास्तीति रूपस्वी अतिशयेन रूपस्वीतमः वृषः स्यात् तं उक्तगुणविशिष्टं च वृषं अलंकृत्य वस्त्रमाल्यानुरूपहेमपदिकाग्रैवेयकघंटादिभिर्वृषोचितभूषणैः भूषयित्वा न केवलं वृषमलंकृत्यताश्चवत्सतरीः अलंकृत्य अलंकृताः कार्यायूथे स्ववर्गे मुख्यागुणैः श्रेष्ठावत्सतर्यः कति चतस्रः चतुःसंख्योपेता एतं युवानमित्येतयैवोत्सृजेरन् त्यजेयुः **नाभ्यस्थमभिमंत्रयतेमयोभूरित्यनुवाकशेषेण** नाभ्यस्थं वत्सतरीणां मध्ये तिष्ठंतं अभिमंत्रयते अभिमुखोनमंत्रयते मंत्रैः स्तौति केन मयोभूरभिमावाहि स्वाहेत्यारभ्य स्वर्णसूर्यः स्वाहेत्येतदंतेन अनुवाकशेषेण अथ पायसप्राशनं नामांतरं कर्म **सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान् भोजयेत्** यस्य यावंत्योगावः दोग्ध्र्यः संति सः तासां सर्वासां पयसि दुग्धे पायसं श्रपयित्वा साधयित्वा ब्राह्मणान् त्रिप्रभृतीन् यथाशक्ति भोजयेत्तर्पयेत् **पशुमप्येके कुर्वंति तस्य शूलगवेन कल्पोव्याख्यातः** एके आचार्याः पशुमपि छागं च कुर्वंति आलभंते उक्तविधिना पायसश्रपणपूर्वकं ब्राह्मणान् वा भोजयंति तस्य पशोः शूलगवेन शूलगवाख्येन कर्मणा कल्पः इतिकर्त्तव्यताकलापोव्याख्यातः कथितः इति सूत्रार्थः ॥ अथ प्रयोगः ॥ तत्र स्वर्गादीनामन्यतमफलकामः कार्त्तिक्यां पौर्णमास्यां आश्वयुजस्य रेवत्यां वा शास्त्रांतराच्चैत्र्यां आश्वयुज्यां वा मातृपूजापूर्वकमाभ्युदयिकं कृत्वा गोष्ठे गवां मध्ये पंचभूसंस्कारान्कृत्वा आवसथ्याग्निं स्थापयेत् प्रणीताप्रणयने प्रणीतापात्रस्य मध्ये पिष्टादिना अंतर्धानं विधाय मूलदेशे पयः इतरत्र जलं

प्रक्षिप्य प्रणये त्तंडुलानंतरं पौष्णं पिष्टचरुं सिद्धमासादयेत् प्रणीतेन पयसा पायसं श्रपयेत् पर्युक्षणांते सुसमिद्धेग्नौ इहरतिः स्वाहा इदमग्नये इह रमध्वं स्वाहा इदमग्नयेइहधृतिः स्वाहा इदमग्नये इह स्वधृतीः स्वाहा इदमग्नये रायस्पोषमस्मासु दीधरत्स्वाहा इदमग्नये इति त्यागसहिताः षडाज्याहुतीर्जुहोति ततआघारावाज्यभागांते पायसेन शूलगवदेवताभ्योऽग्न्यादिभ्यः ईशानांतेभ्यः पायसेन नवाहुतीर्हुत्वा पिष्टकचरोः पूषा गाअन्वेतु नः पूषा रक्षतु सर्वतःपूषा वाजसनोतु नः स्वाहेति मंत्रेण एकामाहुतिं हुत्वा इदं पूष्णे इति त्यागं विधाय पायसपौष्णाभ्यां स्विष्टकृते हुत्वा महाव्याहृत्यादिहोमसंस्रवप्राशनांते पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दद्यात् अथ नमस्ते रुद्रमन्यवइत्यारभ्यासमाप्तेः रुद्रान्जपित्वा एकवर्णादिगुणविशिष्टं वृषभं चतसृभिर्वत्सतरीभिः सहितं वस्त्रमाल्यहेमालंकारादिभिरलंकृतं एतं युवानं पतिं वोददामि तेन क्रीडंती श्चरथप्रियेण मानः साप्तजनुष्यासुभगारायस्पोषेण समिषामदेमेत्येतया ऋचा उत्सृजेरन् ततोवत्सतरीमध्यस्थं वृषभं मयोभूरभिमावहिस्वाहेत्यारभ्य वर्णः सूर्यः स्वाहेत्यंतेन अनुवाकशेषेण अभिमंत्रयते इति वृषोत्सर्गः अत्र यत् प्रेतकृत्यं तदन्योक्तं लिख्यते तत्र प्रेतपित्रादिगतनानाविधसमुचितस्वर्गादिफलकामस्य स्वगतपुण्यापुण्यातिशयाशोकमोक्षगतिकामस्य वाधिकारः तत्र प्रथमसंवत्सराभ्यंतरे कृतसपिंडीकरणस्य च मातृस्थापनपूजनश्राद्धानि भवंति सूतकांतं द्वितीयमहरेवापरं तस्य वृषोत्सर्गकालः न कार्त्तिक्यादिः प्रथमसंवत्सरे काम्यकर्माभ्युदयिकयोरनधिकारात् कुतः "तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृत" इतिवचनात् सूतकांते द्वितीयेऽन्हि इति तु वचनं तथैव काम्यं यत्कर्मेति वचनं बाधित्वैव प्रवर्त्तते इति अनन्यविषयत्वात् कार्त्तिक्यादि तु संवत्सरोत्तरकालीनकार्त्तिक्यादिषु संकोच्य अन्यथाबाधापेक्षत्वाभ्यां वैषम्यापत्तेः ततश्च संवत्सरानंतरं कार्त्तिक्यादौ पित्रागतनानाविधनृत्यादिकामेन क्रियमाणोवृषोत्सर्गोमातृस्थापनपूजनश्राद्ध-

पूर्वकएव कर्त्तव्यः तस्य च कार्तिकी चैत्री आश्वयुजीरेवत्यां कालः अथ फलश्रुतिः "उत्सृष्टोवृषभोयस्मिन्पिबत्यथजलाशये । शृंगेणोल्लिखते भूमिं यत्र क्वचन दर्पितः ॥ पितृणामन्नपानं तत्प्रभृतिमुपतिष्ठते । वृषोत्सर्गादृते नान्यत्पुण्यमस्ति महीतले ॥ तथा । वृषभस्य तु शब्देन पितरः सपितामहाः । आवर्त्तमानादृश्यंते स्वर्गलोके न संशयः ॥ जले प्रक्षिप्य लांगूलं तोयं योद्धरते वृषः । दशवर्षसहस्राणि पितरस्तेन तर्पिताः ॥ कूले समुद्धृतायावच्छृंगे तिष्ठति मृत्तिका । भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः ॥ गवां मध्ये यदा चैव वृषभः क्रीडते तुयत् । अप्सरोघसहस्रेण क्रीडंति पितरस्ततः ॥ लांगूलमुद्यमं यावत्तोयेषु क्रीडते तु सः । अप्सरोगणसंघैश्च क्रीडंति पितरः सदा ॥ सहस्ररत्नपात्रेण कनकेन यथाविधि । तृप्तिस्तु या पितृणां वै सा वृषेण समोच्यते ॥" एतानि चार्थवादकफलानि समुचितान्येवकामनाविषयः अथ वृषस्वरूपं जीववत्सायाः पयस्विन्याः पुत्रं मुखपुच्छपादेषु सर्वशुक्लः नीलोलोहितोवा वृषः तथा "उन्नतस्कंधककुद्मान् ऋजुलांगूलभूषणः । महाकटितटस्कंधोवैडूर्यमणिलोचनः ॥ प्रवालगर्भशृंगाग्रसुदीर्घऋजुवालधिः । नवाष्टदशसंख्यैस्तु तीक्ष्णाग्रैर्दर्शनैः शुभैः ॥ मल्लिकाख्यश्च मोक्तव्यस्तथा वर्णस्तु ताम्रकः । कपिलोवृषभः श्रेष्ठोब्राह्मणस्य प्रशस्यते ॥ श्वेतोरक्तश्च कृष्णश्च गौरः पाटलएव च । तथा पृथुकर्णोमहास्कंधः सूक्ष्मरोमा च योभवेत् ॥ रक्ताख्यः कपिलोयश्च रक्तशृंगगलोभवेत् । श्वेतोदरः कृष्णपृष्ठोब्राह्मणस्य प्रशस्यते ॥ स्निग्धवर्णेन रक्तेन क्षत्रियस्य प्रचक्षते । कांचनाभेन वैश्यस्य कृष्णः शूद्रस्य शस्यते ॥ यस्य प्रागायते शृंगे श्वमुखाभिमुखे सदा । सर्वेषामेव वर्णानां सच सर्वार्थसाधकः ॥ "तथा" मार्जारपादकपिलः तथा कपिलपिंगलः । श्वेतोमार्जारपादश्च तथा मणिनिभेक्षणः" ॥ तथा गौरतित्तिरकृष्णतित्तिरसंनिभा तथा आकर्णमूलात् श्वेतं यस्य मुखं

सनांदीमुखः विशेषतारेक्तवर्णः तथा यस्य जठरं श्वेतवर्णं च पृष्टं च समुद्रनामा अतसीवर्णोजघन्यः तथा "भूमौ कर्षति लांगूलं पुनश्च स्थूलवालधिः । पुरस्तादुन्नतोनीलः सश्रेयान् वृषभः स्मृतः" तथा रक्तशृंगाग्रनयनः श्वेतदंतः प्रवालसदृशमुखैर्धन्यतरः एते सर्वे धनधान्यविवर्द्धनाः तथा "चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः। लाक्षारससवर्णश्चतं नीलमिति निर्दिशेत् ॥ तथा । लोहितोयस्तु वर्णेन मुखे पुच्छे च पांडुरः । श्वेतः खुरविषाणाभ्यां सवृषोनीलउच्यते ॥ नीलाधिकारे "एवं वृषं लक्षणसंप्रयुक्तं गृहोद्भवं क्रीतमथापि राजन् । मुक्तोनशोचेन्मरणं महात्मा मोक्षे मतिं चाहमतोविधास्ये" ॥ तदर्थमेव गाथेयं "एष्टव्याबहवः पुत्रायद्येकोपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्" ॥ तथा अथ वर्जनीयावृषाः "कृष्णताल्वोष्टदशना रुक्षशृंगशफाश्चये ॥ अशक्तदंतान्हस्वाश्च व्याघ्रभस्मनिभाश्चये ॥ ध्वांक्षगृध्रसवर्णाश्च तथामूषकसंनिभाः । कुब्जाः काणाश्च खंजाक्षाः केकराक्षास्तथैव च ॥ अत्यंतश्वेतपादाश्च उद्भ्रांतनयनास्तथा । नैते वृषाः प्रमोक्तव्याः गृहे धार्याः कथंचन" उपादेयश्च वृषस्त्रिहायनः तथा वत्सतर्योपि त्रिहायन्यएव अथ स्नातआचांतः प्रेतपुत्रादिरन्योवा होता ब्रह्मा च तत्रान्यपक्षे ॐ अद्यामुकमासीयामुकतिथौ पित्रादिगतस्वर्गकामोवृषोत्सर्गमहंकरिष्ये इति प्रतिज्ञाय अद्यकर्त्तव्ये वृषोत्सर्गहोमकर्मणि भवान्मया निमंत्रितः तथैव होमकर्मणि कृतावेक्षकत्वेन मया भवान्निमंत्रितइति वस्त्रचंदनतांबूलादिहोतृब्राह्मणैः वृणुयात् ततः स्वयं गवां गोष्टे पंचभूसंस्कारान् कृत्वाग्नेः स्थापनं कुर्यात् होतृब्रह्मप्रणीतानामासनं ब्रह्मोपवेशानादि प्रणीतादि क्षीरोदकप्रणयनं उदकमात्रप्रणयनमिति केचित् आज्यतंडुलाः पौष्णः पिष्टमयः सिद्धएव चरुः होतुर्वस्त्रयुगं सुवर्णकांस्यानि दक्षिणः ब्रह्मणः पूर्णपात्रं वरोवा प्रोक्षण्युदकेन

पात्रप्रोक्षणं पवित्रस्य च प्रणीतासु निधानं प्रणीतेत पयसा यथाविधि पायसचरुश्रपणं ततउद्वासनादि उपयमनकुशानादाय तिष्ठन्समिधस्तिस्त्रस्तूष्णीमग्नौ निक्षिपेत् आज्येन होमः इहरतिरित्याद्याः षडाहुतयः इदमग्नये इति त्यागः आधारावाज्यभागौ ततः पायसेन अग्नये रुद्रायेत्यादि ततः पिष्टचरुः पूषागाइत्यादि ततः पायसपिष्टचरुभ्यां स्विष्टकृद्धोमः ततोभूरित्यादिनवाहुतयः संस्रवप्राशनादिदक्षिणांते रुद्रान्जपित्वा एकस्मिन्पार्श्वे चक्रेण परस्मिन् शूलेन वृषभमंकयित्वा वत्सतरी वृषभश्च हिरण्यवर्णेति चतसृभिः शन्नोदेवीरिति स्नापयित्वा लोहघंटिकानूपूरकनकपटादिभिः पंचाप्यलंकृत्य वृषस्य दक्षिणे कर्णे जपेत् "वृषोहि भगवान्धर्मश्चतुपादः प्रकीर्तितः । वृणोमि तमहं भक्त्या स मां रक्षतु सर्वत ॥ " इति ततः उत्सर्गः ओं अद्यामुकमासीयामुकतिथौ एनं युवानमित्यादि समिषामदेत्यंतेन पारस्करेण एतयैवोत्सृजेरन्निति एवकारेण निषेधात् तथा च ऋगर्थः हेवत्सतर्योवोयुष्माकं एनं युवानं पतिं ददामीत्यर्थः हेवत्सतर्यौयूयमपि न मयोपयोक्तव्याः किंतु तथा त्यक्ताःसत्यउपवनेषु अनेन प्रियेण पत्या सह चरथ स्वच्छंदं भ्रमथ चरत तृणानि खादथेति वा चरगतिभक्षणयोः नोस्माकं गृहेषु साप्तजनुषा सप्तजन्मपर्यंतं असुभगामाचरथ किंच युष्मत्प्रसादात् रायस्पोषेन धनपुष्ट्या इषा अन्नेन च संमदेम सम्यकतृप्येम इत्याशंसा तदुक्तं ततः प्रमुदितास्तेन वृषेण च समन्विताः वनेषु गावः क्रीडंति वृषोत्सर्गः प्रसिद्धः ततोवत्सतरीमध्यस्थं मंत्रयते मयोभूरित्यनुवाकशेषेण ततोयवतिलयुतं जलं पित्रादिभ्यःपितृतीर्थेन दद्यादनेन मंत्रेण "स्वधापितृभ्योमातृभ्योबंधुभ्यश्चापि तृप्तये । मातृपक्षाश्च ये केचित् ये चान्ये पितृपक्षजाः ॥ गुरुश्वसुरबंधूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्नायेचान्ये श्राद्धवर्जिताः ॥ वृषोत्सर्गेण ते सर्वे लभंतां तृप्तिमुत्तमां । दद्यादनेन मंत्रेण

तिलाक्षतयुतं जलं । उत्सृष्टान्नोपयुंजीत स्वामीवान्योपि मानवः " इति वापीकूपतडागादौ उत्सर्गे कृते परस्मिंश्च स्वीकारिते निरिष्टके तज्जलगोचरतया सर्वेषामौपादानिकं स्वत्वं भवति तथेहापि त्यक्तानां वृषादीनां केनचिदप्यस्वीकृतानां निरिष्टकानामौपादानिकं स्वत्वं कुतोन भवतीत्याह "नचाज्यं न च तत्क्षीरं पातव्यं केनचित्कचित् । नवाह्योसौ वृषश्चैषामृते गोमूत्रगोमये" ततश्च यथेष्टविनियोगनिषेधात्मके श्लोके न किंचिदप्युपादानं कार्यं औपादानिकस्वत्वानंतरं विक्रीय कपर्दिकादानमेवास्त्विति चेत् ननु वाह्यइत्यस्य विनियोगपरूपत्वात् किंतु गोपशुविक्रयस्य निषेधः श्रुतेः कथं तदर्थमुपादानं उल्लंघितमर्यादोविक्रयं करोति चेत् तस्योच्छृंखलत्वेन हेयत्वात् शास्त्रानधिकृत्य शास्त्रप्रवृत्तेः संकल्पविरोधाच्च तर्ह्यनेन प्रियेण वनेष्वनवच्छिन्नकालं चरथेति संकल्पः न तु परोपेतं गोबलीबर्दरूपं मुंचतामिति संकल्पः वापीकूपादौ तु सर्वभूतानि स्नानपानावगाहनादीनि यथेष्टमिह कुर्वंत्वित्यनेन संकल्पः यदपि तु वत्सतरीणां अपत्यानि केनचिदुपादाय दोह्यंते तदा न दोषः तत्पर्यंतं दोहनवाहननिषेधवाक्यस्य तात्पर्यात् भवेद्वचनमिति न्यायात् अथ पायसप्राशनं नाम कर्मानंतरं प्रकरणैक्यात्स्वर्गाद्यन्यतमकामस्याभिधीयते तत्र कालविशेषानभिधानात् प्रकृतोत्सर्गकालएव गृह्यते ततश्च वृषोत्सर्गविहितकार्त्तिकाद्यन्यतमसमये मातृपूजाभ्युदयिकपूर्वकमावसथ्याग्नौ स्वकीयानां सर्वासां दोग्ध्रीणां गवां पयआदाय तस्मिन्पयसि तंडुलान्प्रक्षिप्य पायसं श्रपयित्वा त्रिप्रभृतीन् यथाशक्तियथासंभवं ब्राह्मणान्भोजयेत् अथ वा शूलगव विधिना छागं पशुं च कुर्यात् इतिपायसश्रपणं एवंवृषोत्सर्गविधिः स्वर्गादिकामस्यौपासनाग्नौ साग्नेर्भवति यः पुनःप्रेतगतः स्वर्गादिफलस्य साधनभूतोब्राह्मणादीनां वर्णानां एकादशत्रयोदशवा षोडशैकात्रिंशत्तमेष्वस्ति वृषोत्सर्गः स्मृत्यंतरे विहितः तत्रापि द्विजातीनां

साग्निनिरग्नीनां काण्वमाध्यंदिनीयशाखानुसारिणां लौकिकाग्निनानेनैव विधिना मातृपूजाभ्युदयिकश्राद्धरहितः कर्त्ता भवतिप्रेतसपिंडीनां प्रथमेऽब्देकाम्याभ्युदयिकयोर्निषेधात् शूद्रस्य मंत्रवर्जं क्रियामात्रं निरग्नीनां तु स्वर्गादिकामानां कार्त्तिक्याद्यन्यतमकाले लौकिकाग्नौ-कर्त्तव्योभवतीति शेषः अत्र केचिदाहुः "एकादशेह्नि संप्राप्ते यस्य नोत्सृज्यते वृषः । प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपी ॥" त्यादिस्मृतिवचनात् क्षत्रियवैश्यशूद्रैरपि एकादशाहएव आशौचमध्ये नियतकालीनत्वाद्वृषोत्सर्गः कर्त्तव्यइति तदयुक्तं अत्र प्रकरणे एकादशाहद्वादशाहादिशब्दाः आशौचसूतकांतकालोपलक्षकाः अन्यथा 'अहन्येकादशेनाम' तथा " आनंत्यात्कुलधर्माणामायुषश्च परिक्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥" इत्यादिभिर्वचनैर्नामकरणसापिंडनादिक्रिया क्षत्रियादीनां त्रयोदशे षोडशे एकत्रिंशत्तमे दिने भवति तस्मादेकादशाहइत्यादिशब्दाः सूतकांतमुपलक्षयंति ॥

**अथोदककर्म ॥ १ ॥ अद्विवर्षे प्रेते मातापित्रोराशौचं ॥ २ ॥ शौचमेवेतरेषां ॥ ३ ॥ एकरात्रं त्रिरात्रं वा ॥ ४ ॥ शरीरमदग्ध्वा निखनंति ॥ ५ ॥ अंतः सूतके चेदुत्थानादाशौचं सूतकवत् ॥ ६ ॥ नात्रोदककर्म ॥ ७ ॥ द्विवर्षप्रभृतिप्रेतमाश्मशानात्सर्वेनुगच्छेयुः ॥ ८ ॥ यमगाथां गायंतोयमसूक्तं च जपंतइत्येके ॥ ९ ॥ यद्युपेतोभूमिजोषणादि समानमाहिताग्नेरोदकांतस्यगमनात् ॥ १० ॥ शालाग्निना दहंत्येनमाहितश्चेत् ॥ ११ ॥ तूष्णीं ग्रामाग्नि-**

नेतरं ॥ १२ ॥ संप्युक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामहइति ॥ १३ ॥ कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते ॥ १४ ॥ कुरुध्वमित्येवेतरस्मिन् ॥ १५ ॥ सर्वेज्ञातयोपोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा ॥ १६ ॥ समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुः ॥ १७ ॥ एकवस्त्राःप्राचीनावीतिनः ॥ १८ ॥ सव्यस्यानामिकयापनोद्यापनःशोशुचदघमिति ॥ १९ ॥ दक्षिणामुखानिमज्जंति ॥ २० ॥ प्रेतायोदकꣳसकृत्प्रसिंचत्यंजलिनासावेतत्तउदकमिति ॥ २१ ॥ उत्तीर्णाच्छुचौ देशे शाड्वलवत्युपविष्टांस्तत्रैतानपवदेयुः ॥ २२ ॥ अनपेक्षमाणाग्राममायांतिरीतिभूताःकनिष्ठपूर्वाः ॥ २३ ॥ निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्यप्रविशंति ॥ २४ ॥ त्रिरात्रंब्रह्मचारिणोधःशायिनोन किंचन कर्म कुर्युर्न्नप्रकुर्वीरन् ॥ २५ ॥ क्रीत्वा लब्ध्वावादिवान्नमश्नीयुरमाꣳसम् ॥ २६ ॥ प्रेताय पिंडं दत्वावनेजनदानप्रत्यवनेजनेषु नामग्राहं ॥ २७ ॥ मृन्मये ताꣳरात्रीं क्षीरोदके विहायसि निदध्युःप्रेतात्र स्नाहीति ॥ २८ ॥ त्रिरात्रꣳशाब-

माशौचं ॥ २९ ॥ दशरात्रमित्येके ॥ ३० ॥ न स्वाध्यायमधीयीरन् ॥ ३१ ॥ नित्यानि निवर्तेर-न्वैतानवर्ज्जं ॥ ३२ ॥ शालाग्नौचैके ॥ ३३ ॥ अन्यएतानि कुर्युः॥ ३४ ॥ प्प्रेतस्पर्शिनोग्रामंनप्प्र-विशेयुरानक्षत्रदर्शनात् ॥ ३५ ॥ रात्रौचेदतीतस्य ॥ ३६ ॥ प्रवेशनादिसमानमितरैः ॥ ३७ ॥ पक्षं द्वौ वा शौचं ॥ ३८ ॥ आचार्ये चैवं ॥ ३९ ॥ मातामहयोश्च ॥ ४० ॥ स्त्रीणांचाप्रत्तानां ॥ ४१ ॥ प्रत्तानामितरेकुर्वीरन् ॥ ४२ ताश्च तेषां ॥ ४३ ॥ प्रोषितश्चे त्प्रेयाच्छ्रवणप्रभृतिकृतोदकाः कालशेषमा-सीरन् ॥ ४४ ॥ अतीतश्चेदेकरात्रं त्रिरात्रं वा ॥ ४५ ॥ अथकामोदकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभा गिनेयानां ॥ ४६ ॥ प्रत्तानांच ॥ ४७ ॥ एकाद-श्यामयुग्मान्ब्राह्मणान्भोजयित्वामांठसवत् ॥ ४८ ॥ प्रेतायोद्दिश्य गामप्येके घ्नंति ॥ ४९ ॥ पिंडकरणे-प्प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेत् ॥ ५० ॥ निवर्त्तेत चतुर्थः ॥ ५१ ॥ संवत्सरंप्पृथगेके ॥ ५२ ॥ न्यायस्तुनचतुर्थःपिंडोभवतीतिश्रुतेः ॥ ५३ ॥ अह-रहरन्नमस्मै ब्राह्मणायोदकुंभं च दद्यात् ॥ ५४ ॥ पिंडमप्येके निपृणंति ॥ ५५ ॥ १० ॥

॥ **अथोदककर्म** ॥ अथ पुरुषसंस्कारकर्म क्रमप्राप्तं उदककर्म उदकेन जलेन कर्म क्रिया अंजलिदानमित्यर्थः व्याख्यास्यते इति सूत्रशेषः उपलक्षणमेतत् येन आशौचादियमनियमाअपि वक्ष्यते । **अद्विवर्षे प्रेते । मातापित्रोराशौचर्ठ·शौचमेवेतरेषामेकरात्रं त्रिरात्रं वा** द्वे वर्षे वयोयस्यसद्विवर्षः न द्विवर्षः तस्मिन् प्रेते प्रकर्षेण इतोगतः प्रेतोमृतः तस्मिन्निमित्ते माताचपिता च पितरौ तयोः मातापित्रोः आशौचं अशुद्धिः वर्णाश्रमविहितः कर्मानुष्ठानसंकोचावस्था इतरेषां मातापितृभ्यामन्येषां शौचमेव नाशुद्धिः कियंतं कालं एकरात्रं एकमहोरात्रं वा अथवा त्रिरात्रं अयं विकल्पः प्रेतस्य अकृतकृतचूडत्वेन व्यवस्थितः इतरेषां सद्यः शौचमिति गृह्यकारस्य मतं स्मृत्यंतरे तु तेषामथाशौचस्य विहितत्वात् आदंतजननात्सद्यइत्यादिना यच्च पुंसउपनयनात्प्राक् स्त्रियाश्च विवाहात्प्राक् वयोवस्थाविशेषेण सद्यएकरात्रत्रिरात्रादिकमाशौचमुक्तं तत्सवर्णं वर्ण साधारणं विशेषावगमस्याशक्यत्वात् **शरीरमदग्ध्वा निखनंति** ऊनद्विवर्षस्य प्रेतस्य शरीरं कुणपं अदग्ध्वा अग्निदाहमकृत्वा निखनंति गर्त्ते प्रक्षिपंति **अंतःसूतके चेदौत्थानादाशौचं सूतकवत्** चेद्यदि अंतर्मध्ये सूतके जननिमित्ताऽशौचे उत्थानात् उत्थानं सूतकांतं यावत् आशौचं जननाशौचांतरमापतति तदा सूतकवत् एवं मरणाशौचमध्ये यदा मरणाशौचमेवापतति तदाऽपि पूर्वशेषेणैव उत्तरस्य शुद्धिः एतच्च सपिंडविषयेमातापित्रोस्तु विशेषः मातरि पूर्वमृतायां आशौचमध्ये पिता म्रियेत तदा पितृमरणनिमित्तशौचांतोऽशुद्धिः यदा पुनः पितरि मृते तदा पक्षिण्यंते द्वादशप्रहरांते शुद्धिः किंच यदि सूतके रात्रिमात्रावशिष्टे सूतकांतरमापद्यते शावे वा रात्रिमात्रावशिष्टे शावांतरमात्रावशिष्टे सूतकांतरमापद्यते शावे वा रात्रिमात्रावशिष्टे शावांतरमापद्यते तदा द्व्यहमधिकं वर्त्तेते

यदि पुनर्याममात्रावशिष्टे सूतके शावे वा सूतकं शावं सजातीयं वा पतति तदा त्र्यहमधिकं वर्त्तते तथा च स्मृतिः "मातर्यग्रे प्रमीतायाम-शुद्धौ म्रियते पिता। न पूर्वशेषाच्छुद्धिः स्यान्मातुः कुर्याच्च पक्षिणी ॥ रात्रिशेषेद्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् "। इति अन्ये तु इदं सूत्रं अन्यथा व्याचक्षते अंतःसूतके चेद्यदि बालस्य मरणमापद्यते तदाआदुत्थानात् आशौचं अशुद्धिः सूतकवद्भवति नत्वाशौचनिवृत्तिः अन्ये बालमरणनिमित्ताशौचस्याकालीनत्वे बहुकालीन-जनननिमित्ताशौचशोधनासमर्थत्वात् यतः समानजातीयस्य समान-कालीनस्यैव पूर्वोत्पन्नस्य अंतरापतितस्य वा शोधकत्वं **नात्रोदककर्म** अत्र उनद्विवार्षिके प्रेते उदककर्म उदकांजलिदानं न भवति **द्विवर्षप्रभृति प्रेतमाश्मशानात्सर्वेनुगच्छेयुर्यमगाथां गायंतोयम-सूक्तं जपंत इत्येके** द्विवर्षे वयोयस्य सद्विवर्षः तत्प्रभृतिः तदा-दिर्यः प्रेतः तं आश्मशानात् श्मशानावधि सर्वे सपिंडा अनुगच्छेयुः श्मशाननयनविधानादाह उपलक्ष्यते श्मशानशब्देन हि प्रेतदाह भूमिरुच्यते तस्मादाहमपि कुर्युः दाहसंनियोगशिष्टं उदकं च दद्युः एके आचार्याः यमगाथां यमदैवत्यायामृषिगीतं साम गायंतः पठंतः तथा यमसूक्तं यमदैवत्यानामृचां समुदायं सूक्तशब्दवाच्यं जपंतोऽनुगच्छेयुरित्याहुः**युग्मपेतोभूमिजोषणादिसमानमाहिताग्नेरो-दकांतस्य गमनात्** यदि उपेतः उपनीतः प्रेतः स्यात् गृह्योक्त-संस्कारेषु तस्याधिकारात् वैतानिकस्य च मंत्रब्राह्मणकल्पसूत्रेषु पृथक्संस्कारान्नानात् तदा भूमिजोषणादिकर्म समं तुल्यं केन आहि-ताग्नेः कर्मणा यथा आहिताग्नेः औपासनिकस्य किं पर्यंतंआ उदकं तस्य उदकसमीपस्य गमनात् एतदुक्तं भवति यद्युपनीतः प्रेतोभवति तदा यथाहिताग्नेर्भूमिजोषणादि उदकांजलिदानपर्यंतं कर्म तथैव कुर्यात् **शालाग्निना दहंत्येनमाहितश्चेत्** चेद्यदि असौ

प्रेतः आहितः कृतावसथ्याधानः स्यात् तदा एनं प्रेतं शालाग्निना औपासनेन हंति पुत्रादयः **तूष्णीं ग्रामाग्निनेतरं** तूष्णीं मंत्रवर्जं ग्रामाग्निना लौकिकेन पावकेन इतरमकृतावसथ्याधानं दहंतीत्यनुषंगः **संयुक्तं मैथुनं वोदकंयाचेरन्नुदकं करिष्यामहइति** संयुक्तं केनचित् यौनेन संबंधेन संबंधोमैथुनः एकदेशलक्षणया मैथुनशब्दवाच्यायाभार्यायाः भ्राता श्यालइत्यर्थः तं वा उदकं जलं याचेरन् प्रार्थयेरन् उदकं करिष्यामहइत्यनेन मंत्रेण **कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते** एवं पृष्टः संयुक्तः शालोवा प्रतिब्रूयात् किं कुरुध्वं क्व अशतवर्षे प्रेते शतवर्षेभ्योऽर्वाक् मृते सति **कुरुध्वमेवेतरस्मिन्** इतरः शतवर्षप्रभृतिः तस्मन् मृते कुरुध्वंइत्येव तावदेव प्रतिब्रूयात् न सा चैवं पुनरिति **सर्वे ज्ञातयोयोभ्यवयंत्यासप्तमात्पुरुषाद्दशमाद्वा** ज्ञातयः सपिंडाः समानोदकाश्च सर्वएव अपोभ्यवपंति स्नानार्थं नद्यादेर्जलं प्रविशंति किं यावत् आसप्तमात्पुरुषात् सप्तमं पुरुषमभिव्याप्य यावंतः सापिंडाः दशमाद्वा पुरुषात् आदशमं पुरुषमभिव्याप्य यावंतः समानोदकाश्च तावंतइत्यर्थः **समानग्रामवासे यावत्संबंधमनुस्मरेयुः** समाने एकस्मिन् ग्रामे वासः समानग्रामवासः अवस्थानं ग्रामवासइति तस्मिन् सति यावत् यदवधि संबंधः सापिंड्यं समानोदकत्वं सगोत्रत्वं वा अनुस्मरेयुः अस्मिन्पुरुषे वयं संबंध्यामहे इति जानीयुः तावंतः अपोभ्यवपंति **एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयापनोद्यापनः शोशुचदघमिति दक्षिणमुखानि मज्जंति** कथमित्याह एकं परिधानीयमेव येषां ते एकवस्त्राः प्राचीनावीतिनः कृतापसव्याः प्राचीनावीतं विद्यते येषां ते प्राचीनावीतिनः सव्यस्य वामस्य पाणेः अनामिकया उपकनिष्ठिकया उदकमपनोद्य अपनः शोशुचदघमीत्येतावता मंत्रेणापसार्य दक्षिणामुखाः निमज्जंति युगपत्सकृत्स्नांति **प्रेतायोदकं सकृत्प्रसिंचंत्यंजलिनासावेतत्ते उदकमिति** प्रेताय उदकां-

जलिं सकृत्प्रसिंचंति शुद्धायां भूमौ प्रक्षिपंति कथं असौ प्रेतएतत्ते उदकं इत्यनेन मंत्रप्रयोगेण **उत्तीर्णान् शुचौ देशे शाड्वलवत्युपविष्टास्तत्रैव तानपवदेयुः** उत्तीर्णान् जलाद्बहिर्निर्गतान् शुचौ देशे मूत्रपुरीषभस्मतुषांगारास्थ्याद्यशुचिद्रव्यरहिते देशे भूभागे पुनः कीदृशे शाड्वलवति शाड्वलं हरिततृणं तदस्मिन्नस्तीति शाड्वलवान् तस्मिन् शाड्वलवति उपविष्टान् आसीनान् अन्ये लोकयात्रिकाः सुहृदः एतान् प्रेतपुत्रादीन् अपवदेयुः प्रेतस्य गुणानुकथनेन इतिहासपुराणादिविचित्रकथाभिः संसारासारताख्यापनेन तान् शोकरहितान् कुर्युः **अनपेक्षमाणाग्राममायांति रीतिभूताः कनिष्ठपूर्वाः** अनपेक्षमाणाः पश्चादनवलोकयंतः रीतीभूताः श्रेणीभूताः पंक्तीभूताः कनिष्ठपूर्वाः कनिष्ठोलघीयान् पूर्वः अग्रिमोयेषां ते कनिष्ठपूर्वाः स्वस्वकनिष्ठानुसारिणइत्यर्थः ग्रामं आयांति आगच्छंति **निवेशनद्वारे पिचुमंदपत्राणि विदश्याचम्योदकमग्निं गौरसर्षपांस्तैलमाचम्याश्मानमाक्रम्य प्रविशंति** निवेशनस्य गृह्यपतिविहितगृहस्य द्वारे पिचुमंदस्य निंबस्य पत्राणि छदनानि विदश्य दंतैरवखंड्य आचम्य स्मार्त्तमाचमनं विधाय उदकं जलं अग्निं द्वारिवृतं तथा गोमयमार्द्रं सर्षपान् गौरान् तिलतैलसंभवं एतानि प्रत्येकमालभ्य स्पृष्ट्वा अश्मानं प्रस्तरमाक्रम्य पादेनालभ्य प्रविशंति गृहं **त्रिरात्रं ब्रह्मचारिणोधःशायिनोन किंचन कर्म कुर्युर्न कुर्वीरन्** त्रीण्यहोरात्राणि यावद्ब्रह्मचारिणः अकृतस्त्रीप्रसंगाः अधः खट्वाव्यतिरेकेण शेरतइत्येवं शीलाः अधःशायिनः किंचन किमपि कर्म गृहव्यापारादि लौकिकं न कुर्युः न प्रकुर्वीरन् अन्यैर्न कारयेयुः अंतर्भूतोऽत्र णिच् ज्ञेयः **क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुरमांसं प्रेताय पिंडं दत्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहं** क्रीत्वा मूल्येन गृहीत्वा लब्ध्वा वा अन्यतः प्राप्य दिवा दिवसे न रात्रौ अश्नीयुः भुंजीरन् अमांसं मांसवर्जं किं कृत्वा

प्रताय पिंडं अवयवपूरकं दत्वा कथं नामग्राहं प्रेतस्य नाम गृहीत्वा केषु अवनेजनदानप्रत्यवनेजनेषु अवनेजनं दानं च प्रत्यवनेजनं च अवनेजनदानप्रत्यवनेजनानि तेषु त्रिरात्रमयं **मृन्मयेताꣳरात्रिंक्षीरोदकेविहायसि निदध्युः प्रेताऽत्र स्नाहीति** मृन्मये शरावादौ पात्रे कृत्वा तां यस्मिन् दिने प्रेतोऽभूत्तत्संबंधिनं रात्रिक्षीरं च उदकं च रात्रिक्षीरोदके दुग्धपानीये पात्रैकसामार्थ्यादेकीकृते विहायसि आकाशे निदध्युः स्थापयेयुः प्रेतात्रस्नाहीत्यनेन मंत्रेण विज्ञानेश्वराचार्यस्तु द्रव्यद्वयनिधानसामर्थ्याद्द्वयोः पात्रयोः भेदेन निधानं मन्यते मंत्रं चोहति प्रेतात्र स्नाहि पिबस्वेदमिति **त्रिरात्रशावमाशौचं दशरात्रमित्येके** एवं प्रेतस्य पुत्रादीनां मरणदिनकृत्यमभिधायाशौचकालनिर्णयार्थमाह त्रिरात्रं त्रीण्यहोरात्राणि कालाध्वनोरत्यंतसंयोगइत्युपपदविभक्तिर्द्वितीया तेन संततं आशौचं अशुचित्वं एके आचार्याः मन्वादयः उपनयनप्रभृति दशाहे मन्यंते दशाहं दशाहोरात्राणि अत्र प्रकरणे अहः शब्दो- रात्रिशब्दश्च अहोरात्रोपलक्षकः एके त्रिरात्रं एके दशरात्रं तच्च व्यवस्थितं वृत्तिस्वाध्यायापेक्षया यथाह "एकाहाच्छुध्यते विप्रो योग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु निर्गुणोदशभिर्दिनैरिति" एतदपि वृत्तिसंकोचे व्यवस्थापकं तद्यथा यदात्र्यहैकोऽश्वस्तनिकोवा स्वाध्यायाग्निसंपन्नोभवति तदा तस्य वृत्तिसंपादनाय सद्यः शौचं भवति यदा तु कुशूलकुंभीधान्यस्तु केवलस्वाध्यायसंपन्नश्च तदा त्रिरात्रं यदा दशरात्रकुटुंबवृत्तिपर्याप्तातिरिक्तधान्योवृत्तस्य स्वाध्यायवांश्च तदा दशरात्रं वृत्तिस्वाध्यायरहितस्य वृत्तिहीनस्यापि सर्वदा दशरात्रं अयं वृत्तिसंकोचात् वृत्तिस्वाध्यायापेक्षयाऽयं आशौचकालसंकोचः स वृत्तिसंपादनविषयएव न पुनः कर्मांतराधिकारसंपादनस्तेन यस्याशौचिनः आपद्भवति तदपाकरणार्थं वृत्तस्वाध्यायसंपन्नस्य च आशौचसंकोचोनेतरेषां जनानां शौचेष्येवं **न स्वाध्या-**

**यमधीयीरन्** स्वाध्यायं वेदं नाधीयीरन् न पठेयुः न चाध्यापयेयुः येषां यावदाशौचं **नित्यानि निवर्त्तेरन्वैतानवर्जं** नित्यान्यावश्यकानि संध्यावंदनादीनि निवर्त्तेरन् अनधिकारा न प्रवर्त्तंते कथं वैतानवर्जं वितानोगार्हपत्याहवनीयदक्षिणाग्नीनां विस्तारस्तत्र साध्यं अग्निहोत्रादि कर्म तद्वैतानं तद्वर्जयित्वान्यन्निवर्त्ततइत्यर्थः **शालाग्नावेके अन्यएतानि कुर्युः** शालाग्निः आवसथ्यः तत्र शालाग्नौ साध्यानि सायंप्रातर्होमस्थालीपाकादीनि वर्जयित्वा नित्यानि निवर्त्तेरन्नित्येके आचार्याः मन्यंते तस्मिन्पक्षे न स्वयं कुर्यात् किंत्वन्ये न कारयेयुः गृह्यकारपक्षे न कुर्यान्न च कारयेत् यथाह कात्यायनः " सूतके मृतके चैव स्मार्त्तं कर्म निवर्त्तते। पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् " 'वैतानिकं स्वयं कुर्यात्तत्त्यागेन प्रशस्यते' तथा " स्मार्त्तकर्मपरित्यागोराहोरन्यत्र सूतके। श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्" इति स्मरणात् राहुदर्शने तु राहोरन्यत्र सूतकावचनात् यावद्राहुदर्शनं तावद्राहुदर्शननिमित्तकं स्नानतर्पणदेवार्चनजपहोमदानं कुर्यात् **प्रेतस्पर्शिनोग्रामं न प्रविशेयुरानक्षत्रदर्शनात्** प्रेतस्पर्शोविद्यते येषां ते प्रेतस्पर्शिनः सपिंडाः ग्रामं न प्रविशेयुः नागच्छेयुः किं यावत् आनक्षत्रदर्शनात् नक्षत्राणां दर्शनं नक्षत्रदर्शनं तस्मात् आअवधेः **रात्रौ चेदादित्यस्य** चेद्यदि रात्रौ दिशि प्रेतस्पर्शः तदा आदित्यस्य सूर्यस्य दर्शनात्प्राक् न प्रविशेयुरित्यनुषंगः **प्रवेशनादि समानमितरैः** प्रवेशनमादौ यस्य निंबपत्रादिदंशनस्य तत्प्रवेशनादि कर्म इतरैरसपिंडैः समानं तुल्यं असपिंडानामयं नियमः प्रणायामः एव ब्राह्मणस्य आशौचमभिधाय असपिंडानां तु "प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्" इतियाज्ञवल्क्योक्तेरिच्छतां विकल्पः संयमः प्राणायामः एवं ब्राह्मणस्य आशौचमभिधायाधुना इतरवर्णानामाशौचकालनिर्णयार्थमाह

**पक्षं द्वौ वा ऽशौचं** पक्षं पंचदशाहोरात्राणि वैश्यस्याशौचं भवति द्वौ पक्षौ त्रिंशदहोरात्राणि शूद्रस्य वाशब्दात् द्वादशाहोरात्राणि क्षत्रियस्य तथा च स्मृत्यंतरे ॥ शूद्रस्य वाशब्दात् द्वादशाहोरात्राणि क्षत्रियस्य तथा च स्मृत्यंतरे ॥ शुध्येद्विप्रोदशाहेन द्वादशा भूमिपः । वैश्यः पंचदशाहेन शूद्रोमासेन शुध्यती ॥ ति **आचार्ये चैवं** आचार्ये उमनयनपूर्वकं वेदाध्यापके च इदं उदकदानादि कर्त्तव्यं मातामहयोश्च च शब्दादेवमेवेति द्विवचनं मातामह्यपेक्षया मातामही च मातामहश्च मातामहौ तयोः स्त्रीणांचाप्रत्तानां अप्रत्तानामपरिणीतानां च स्त्रीणां च कन्यानां चकारात् एषैव निखननदहनोदकदानप्रभृतीतिकर्त्तव्यता आशौचेपि विशेषोगृह्यकारमते नास्त्यभिधानात् स्मृत्यंतरे तु पुनर्दृश्यते अहस्तदत्तकन्यास्त्विवति एतच्चूडाकरणानंतरं दानात्प्राक्कुतः ॥ स्त्रीणां चूडात्तथादानात्संस्कारादप्यधः क्रमात् ॥ सद्यः शौचमथैकाहस्त्र्यहः स्यात्पितृबंधुषु ॥ इतिस्मृतेः तस्मादपरिणीतानांस्त्रीणांचूडाकरणात्प्राक्सद्यः शौचं चूडाकरणात् उपरि दानात् प्राक् एकाहं ततः उपरि विवाहात्प्राक् त्र्यहमिति निर्णयः **प्रत्तानामितरे कुर्युः ताश्च तेषां** प्रत्तानां परिणीतानां स्त्रीणां इतरे भर्त्रादियोदाहादि कर्म कुर्युः न पित्रादयः ताश्च प्रत्ताः स्त्रियस्तेषां भर्त्रादीनां यथाधिकारमुदकदानादि कर्म कुर्युः पित्रादीनां अत्र विशेषः "दत्ता नारी पितुर्गेहे सूयते म्रियतेऽपिवा । तद्बंधुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभि ॥ रितिवचनात् प्रत्तानामपि पितुर्बंधूनां च आशौचाप्राप्तिमात्रं **प्रोषितश्चेत्प्रेयांश्छ्रवणप्रभृतिकृतोदकाः कालविशेषमासीरन्** प्रोषितः प्रवासं गतः चेद्यदि प्रेयान् म्रियते तदा पुत्रादयः तन्मरणश्रवणकालमारभ्य कृतं दत्तं स्नानपूर्वकमुक्तविधिना उदकं यैः तेकृतोदकाः कालशेषमासीरन् आशौचसमयशेषमासीरन् आशौचधर्मेण वर्त्तेरन्नित्यर्थः **अतीतश्चेदेकरात्रं त्रिरात्रं वा**

चेद्यदि आशौचकालोऽतीतः प्रोषितमरणे च श्रुते तदा एकरात्रमाशौचं त्रिरात्रं वा चेद्यदि आशौचकालोतीतः प्रोषितमरणे च श्रुते तदा एकरात्रमाशौचम् वा अत्र यद्यपि सामान्येनोक्तं तथापि स्मृत्यंतराद्विशेषो ऽवगंतव्यः कथं "मासत्रये त्रिरात्रंस्यात् षण्मासंपक्षिणीभवेत्। अहस्तु नवमादर्वाक् सद्यः शौचमतः परं ॥ तथा। पितरौ यन्मृतौस्यातां दूरस्थोपि हि पुत्रकः। श्रुत्वातद्दिनमारभ्य दशाहं सूतकी भवेदिति" **अथ कामोदकान्नृत्विक्श्वशुरसंबंधि मातुलभागिनेयानां प्रत्तानां च** अथ नियमेन कृत्यमभिधाय अधुना कामतः कृत्यमाह-कामोदकानि कामेन इच्छया उदकानि उदकदानानि भवंति केषां ऋत्विक् याजकः श्वशुरौ भार्याया मातापितरौ सखा मित्रं संबंधिनः वैवाह्या मातुला मातृभ्रातरः भागिनेयाः भगिनीपुत्राः एतेषां प्रत्तानां ऊढानां दुहितृभगिन्यादीनां पंच स्त्रीणां इच्छया उदकदानं अतोऽदाने प्रत्यवायोनास्ति **एकादश्यामयुग्मान् ब्राह्मणान् भोजयित्वा** श्राद्धविधिना **मांसवत्** मांसेन सहितं पायसौदनादि एके आचार्याः **प्रेतमुद्दिश्य गामपि घ्नंति** शाखापशुविधानेन तन्मांसेन श्राद्धं कुर्वंति तच्छ्राद्धमग्रे वक्ष्यति नद्यंतरे नावं कारयेत् नवेति **पिंडकरणे प्रथमः** आद्यः प्रेतः स्यात् तत्प्रभृति पिंडदानमित्यर्थः चेद्यदि सप्रेतः पुत्रवान् अधिकृतेन साग्निना पुत्रेण पुत्रीभवति अयमर्थः साग्नेः पुत्रस्य यदि पिता म्रियेत तदा पिंडपितृयज्ञानुष्ठानानुरोधेन द्वादशेहनि सपिंडीकरणं विधाय अमावास्यायां तत्प्रभृति पिंडपितृयज्ञे पिंडदानं पिंडान्वाहार्यकं श्राद्धं च तत्प्रभृतिपार्वणमेव श्राद्धं भवतीति एकोद्दिष्टं तु निरग्निविषयं निवर्त्तेत **चतुर्थः** सपिंडने कृते पित्रादिभ्यस्त्रिभ्यः पिंडादिदानं चतुर्थः पिंडोनिवर्त्तेत पिंडादिस्त्रिषु इति श्रुतेः त्रिषु पिंडः प्रवर्त्तेतइति स्मृतेश्च **संवत्सरं पृथगेके** एके आचार्याः साग्नेरपि पुत्रस्य संवत्सरं यावत् पृथक्

एकस्यैव पितुः पिंडदानमिति संवत्सरे सपिंडीकरणमिति स्मरणात् न च असपिंडीकृतस्य इतरैः सहदानं युज्यते सपिंडीकरणमिति शब्दः सह पूर्वजैः समं पिंडीकरणं एकीकरणं मेलनमिति यावत् इति व्युत्पत्त्या अन्वर्थः तेन संवत्सरं यावत् असपिंडीकृतस्य पितुः प्रेतस्य पृथक्दानमिच्छंत्येके तथा सति संवत्सरे सपिंडीकरणमिति स्मृतेरनुग्रहः कृतोभवति एवं प्राप्तउच्यते **न्यायस्तु** तुशब्देन पूर्वपक्ष-व्यावृत्तिः नैतदेवं स्मृत्यनुग्रहन्यायेन इदं परिकल्प्यते कुतः श्रुतिवि-रोधात् कासौ श्रुतिः **न चतुर्थः पिंडोभवतीतिश्रुतिः** कथं श्रुतिवि-रोधः तेनाधिकृतस्य पुत्रस्य साग्नेः पृथक् पृथक् क्रियमाणे चतुर्णा-मपि निर्वपणेधिकारोभवति अमावास्यायां पृथक् प्रेतस्य पार्वणं च त्रयाणामिति भवति श्रुतिविरोधः तेनाधिकृतस्य पुत्रस्य साग्नेः सपिं-डीकरणादूर्ध्वं एकोद्दिष्टं कर्त्तव्यं न भवति सपिंडीकरणं तु द्वादशा-हएव नियतं अनधिकृतस्य निरग्नेस्तु संवत्सरादिषु सपिंडीकरणकालेषु कृतस्य सपिंडनस्यापि पितुः संवत्सरादूर्द्धमपि प्रतिसंवत्सरं एकोद्दिष्टमेव **अहरहरन्नमस्मैब्राह्मणायोदकुंभं च दद्यात्** अहरहः प्रतिदिनं अस्मै प्रेतायोद्दिश्य ब्राह्मणाय संप्रदानभूताय अन्नं भोजनपर्याप्तं उदकुंभं च जलपूर्णं च घटं संवत्सरं च यावद्दद्यात् प्रयच्छेत् **पिंडमप्येके निर्पृणंति** एके आचार्याःअहरहः पिंडनिर्वपणमपीच्छंति तच्चानधिकृ-त्याग्निरग्निविषयं अधिकृतस्यहि साग्नेः पार्वणमेव भवति नैकः पिंडः न चैतत्प्रतिदिनमन्नोदककुंभदानं संवत्सरसपिंडीकरणपक्षएव प्रागपि संवत्सरात् यदि वा वृद्धिरापद्येत इत्यादि स्मृतिविहितकालांतरे सपिंडीकरणेऽपि तदूर्ध्वं संवत्सरं द्विजइति तस्मात्साग्निना निरग्निना च पुत्रेणाहरहअन्नोदकुंभदानं कर्त्तव्यं पक्षे यत्पिंडदानं तन्निरग्नेरेव इतरस्य त्रिभ्यः पिंडदानं प्रसज्येत एकपिंडनिर्वपणनिषेधात् तर्हि त्रिभ्योऽपि ददातु न प्रेतस्य हि तत् स्मर्यते " मृतेहनि तु कर्त्तव्यं

प्रतिमासं तु वत्सरं । प्रतिसंवत्सरं चैव माद्यमेकादशे हनी" त्येतदेकोद्दिष्टं साग्नेः सपिंडीकरणात् प्राक् उर्ध्वं तु पार्वणमेव यथाह मनुः "असपिंडक्रियाकर्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिंडमेकं तु निर्वपेत् । तथा । सहापिंडक्रियायां तु कृतायामस्य धर्मतः । अनयैवावृताकार्यं पिंडनिर्वपणं सुतैरिति स्मृत्यंतरं च यः सपिंडीकृतं प्रेतं पृथक् पिंडेन योजयेत् । विधिघ्नस्तेन भवति पितृहाचोपजायते" इति एतच्च औरसक्षेत्रजसाग्निपुत्रविषयं यतः स्मरंति ॥ औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । दद्यातामितरे कुर्युरेकोद्दिष्टं सुता दशे ॥ ति अत्राशौचप्रसंगात् स्मृत्यंतरोक्तआशौचापवादोलिख्यते ॥ "ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वतां ॥ सत्रव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ कारवः शिल्पिनोवैद्यादासीदासास्तथैव च ॥ राजानोराजभृत्याश्च सद्यः शौचाः प्रकीर्तिता ॥ इति एतच्च यज्ञादौ आरब्ध एव कुतः । आरब्धे सूतकं नास्ति अनारब्धे तु सूतकं इति वचनात् आरंभश्चैवं "आरंभोवरणं यज्ञे संकल्पोव्रतसत्रयोः ॥ नांदीश्राद्धं विवाहादौश्राद्धे पाकपरिक्रिये ॥ ॥ इतिसूत्रार्थः ॥ अथ पद्धतिः ॥ तत्र ऊनद्विवार्षिकं प्रेतं अरण्यं नीत्वा भूमौ निखनेत् द्विवर्षप्रभृति उपनयनादर्वाक् प्रेतं श्मशानं नीयमानं एव सपिंडाः यथा ज्येष्ठाः पुरःसरं पंक्तिभूताः अनुगच्छंति पक्षे यमगाथां गायंतोयमसूक्तं च जपंतः ततस्तत्र तं प्रेतं भूमिजोषणादिरहितं दग्ध्वा वक्ष्यमाणविधिना स्नात्वा उदकांजलिंच दत्वा गृहमागता यथोक्तमाशौचमाचरेयुः उपनयनादूर्ध्वं भूमिजोषणादिरहितं उदकांतगमनपर्यंतं यथाह्निताग्नेः कर्म तथैव यथासंभवं भवति अत्र औपासनिकं पुत्रादिरधिकारी दुर्बलं ज्ञात्वा स्नापयित्वा शुद्धवस्त्रेणाच्छाद्य दक्षिणशिरसं दर्भवत्यां भूमौ निवेशयेत् पूर्वपक्षे तु रात्रौ चेन्मृत्युशंकाग्निहोत्रिणः ॥ हुत्वाऽवशिष्टाः पक्षेस्मिन् जुहुयात्सकलाहुतीः । दर्शे तत्र वैतरणीं यथाशक्ति यथाश्राद्धं

हिरण्यं भूम्यादिकं सर्वपापक्षयार्थं दापयित्वा अथ गतासुं घृतेनाभ्यज्य उदकेनाप्लाव्य सुवस्त्रमुपवीतिनं चंदनोक्षितसर्वांगं पुष्पमालाविभूषितं मुखनासिकाचक्षुःश्रोत्ररंध्रेषु निक्षिप्तहिरण्यं सकलं वस्त्रेणाच्छाद्य पुत्रादयोनिर्हरेयुः एतच्चावसथ्याग्निसन्निधौ गृहमरणपक्षे यदा तु गंगादितीर्थेऽग्निसन्निधौ अर्द्धजले मरणं तत्र तत्रैवेदं स्नपनादिहिरण्यशकलनिधानांतं कर्म कुर्यात् निर्हरणपक्षे आमपात्रे संतापाग्निमादायाग्निपुरःसरं प्रेतं यमगाथां यमसूक्तं वा जपंतः पुत्रादयःश्मशानं नयंति तत्राधिकारी पुत्रादिराप्लुत्य भूमिजोषणपूर्वकं दक्षिणोत्तरायतं दारुचयं विधाय चितौ कृष्णाजिनं प्रागग्रीवमुत्तरलोमास्तीर्यतत्रोत्तानं दक्षिणशिरसमेनं निपात्य दक्षिणनासारंध्रे आज्यपूर्णं स्रुवं निधाय पादयोरधरारणिं प्रागग्रामुरस्युत्तरां पार्श्वयोः सव्यदक्षिणयोः शूर्पचमसौ मुसलसहितमुलूखलं न्युब्जमूर्वोरंतराले तत्रैवं चात्रप्रोक्षणीं च अरुदन् भयरहितोनिदध्यात् अपसव्येन वाग्यतोदक्षिणामुखः सन् अथोपविश्य सव्यं जान्वाऽच्यौपासनाग्निं गृहीत्वा अस्मात्त्वमधिजातोसीत्यनयर्चा स्वाहांतया दक्षिणतः शनैरग्निं दद्यात् अनावसथिकं तु एवमेव ग्रामाग्निना अमंत्रकं दहति ततोदाहांते नद्याद्युदकसमीपं गत्वा समीपस्थयोनिसंबंधं श्यालकं वा उदकं करिष्यामहइत्यनेन मंत्रेण उदकं याचेरन् सपिंडादयः एवं याचिते यदि शतवर्षादर्वाक् प्रेतोभवति तदा कुरुध्वं मा चैवं पुनरित्येवं प्रतिवचनं दद्यात् अथ शतवर्षादूर्ध्वं प्रेतोभवति तदा कुरुध्वमित्येतावदेव ततः सप्तपुरुषसंबंधिनः सपिंडाः दशपुरुषसंबंधाः समानोदकाश्चैकग्रामवासे यावत्स्मृतेः संप्रविशंति एकवस्त्राः प्राचीनावीतिनःसव्यहस्तस्यानामिकायांगुल्याउदकमपनोद्यापनः शोशुचदघमित्येतावता मंत्रेण दक्षिणमुखं तूर्ष्णीं निमज्जंति ततः प्रेतमुद्दिश्यामुकगोत्रामुकशर्मन् प्रेतैतत्ते उदकमुच्चार्यैकैकमंजलिं सकृत् भूमौ प्रक्षिपंति ततउदकादुत्तीर्य शुचौ देशे शाड्वलवत्युपविष्टान् सपिंडान्

अन्ये सुहृद इतिहासपुराणादिविदग्धकथाभिः संसारानित्यतां दर्शयंतोपवदेयुः तथा हि ॥ कृतोदकात्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ॥ स्नातानपवदेयुस्तानितिहासपुराणकैः ॥ मानुष्ये कदलीस्तंभनिःसारे सारमार्गणं। करोति यः ससंमूढोजलबुद्बुदसन्निभे॥ पंचधा संभृतः कायोयदि पंचत्वमागतः कर्मभिः स्वशरीरोत्थैस्तत्र कापरिवेदना ॥ गंत्री वसुमती नाशमुदधिर्दैवतानि च ॥ केन प्रत्ययः कथं नाशं मर्त्यलोकोन यास्यति ॥ श्लेष्माश्रुबांधवैर्मुक्तं प्रेतोभुंक्ते यतोऽवशः । अतोन रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ इति संश्रुत्य गच्छेयुः गृहं बालपुरः सराः । विदश्य निंबपत्राणि नियताद्वारि वेश्मनः ॥ मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधारिणि ॥ धर्मं कुरुत यत्नेन योवः सद्गतिमेष्यति ॥ विष्णुः । यदुदगयनं तदहः दक्षिणायनं रात्रिःसंवत्सरोह्यहोरात्रं तत्रिंशता मासोद्वादश मासा वर्षं द्वादशवर्षशतानि दिव्यानि कलियुगं द्विगुणानि द्वापरं त्रिगुणानित्रेतायुगंचतुर्गुणानि कृतयुगं द्वादशसहस्राणि दिव्यानि चतुर्युगसहस्रं तु कल्पः सच पितामहस्याहस्तावतीचास्यरात्रिरेवंविधेनाहोरात्रेण मासवर्षगणनया सर्वश्रेष्ठस्यैव ब्रह्मणोवर्षशतमायुरेवं ब्रह्मायुषा च परिच्छिन्नः पौरुषोदिवसस्तस्यांते महाकल्पस्तावत्येव चास्य निशा पुरुषाणामहोरात्राणामतीतानां संख्यैव नास्ति च भविष्याणामनाद्यंतत्वात्कालस्य "एवमस्मिन्निरालंबे काले सततयायिनि । न तद्रूपं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा" गंगायाः सिकताधारा तथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ चतुर्दश विनश्यंति कल्पे कल्पे सुरेश्वराः सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ बहूनींद्रसहस्राणि दैत्येंद्र नियुतानि च । विनष्टानीह कालेन मनुष्याणां तु का कथा ॥ राजर्षयश्च बहवः सर्वे समुदितागुणैः । देवर्षयश्च कालेन सर्वे ते निधनं गताः ॥ ये समर्थाजगत्राणाः सृष्टिसंहारकारिणः । तेऽपि कालेन नीयंते काले-

हि बलवत्तरः ॥ आक्रम्य सर्वे कालेन परलोकाय नीयते। कर्मपथ्यो-दनोजंतु स्तत्र का परिवेदना ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्ममृतस्य च। अर्थे दुःपरिहार्येऽस्मिन्नास्ति शोकसहायता ॥ शोचंतोनोपकुर्वंति मृतस्येह जनायतः। अतोन रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥ सुकृतं दुष्कृतं यस्य सहायौ यस्य गच्छतः ॥ बांधवैस्तस्य किं कार्यं शोचद्भिरथवा तथा ॥ बांधवैर्नाम शोचद्भिः स्थितिं प्रेतोन विंदति। अस्वस्थपतितान्येव पिंडतोयप्रदायिनः॥ अर्वाक्सपिंडीकरणात् प्रेतो-भवति वै मृतः। प्रेतलोकगतस्यान्नं सोदकुंभं प्रयच्छति ॥ देवतायतन-स्थाने तिर्यग्योनौ तथैव च। मनुष्येषु तथा प्रैति श्राद्धं दत्तं स्वबांधवैः ॥ प्रेतश्च श्राद्धकर्त्तुश्च पृथक् श्राद्धे कृते ध्रुवं। तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकं ॥ एतावदेव कर्त्तव्यं सदा प्रेतस्य बंधुभिः। नोपकुर्यान्नरः शोचन् प्रेतस्यात्मनएवच॥ दृष्ट्वालोकमनानंदं म्रियमाणांश्च बांधवान् ॥ धर्ममेकं सहायार्थे वरयध्वं सदा नराः ॥ मृतोपि बांधवः शक्तोनानुगंतुं मृतं नरः ॥ जायावर्जं हि सर्वस्वं याम्यः पंथाश्च बिभ्यते। धर्मएकोनुयात्येनं यत्र क्वचन गामिनं । तत्रासारे त्रिलोकेऽस्मिन् धर्मं कुरुतं माचिरं ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चा पराह्णिकं। न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतं ॥ क्षेत्रापणगृ-हासक्तं अन्यत्र गतमानसं। वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ न कालस्य प्रियः कश्चिदप्रियोवा न विद्यते ॥ आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनं ॥ नाप्राप्तकालोम्रियते विद्धः शरशतैरपि। कुशाग्रे-णापि संस्पृष्टः प्राप्तकालोन जीवति ॥ नौषधानि न मंत्राश्च नहोमान-पुनर्जपाः। त्रायंते मृत्युनोपेतं जरया वापि मानवं ॥ यथा धेनुसहस्रेषु वत्सोविंदति मातरं। तथा पूर्वकृतं कर्म कर्त्तारमनुविंदति॥ आगामिनमनर्थं हि प्रतिष्ठानशतैरपि। न निवारयितुं शक्तस्तत्र का परिवेदना ॥ भारते यथा काष्ठं च काष्ठं च समेयातां महोदधौ। समेत्य च व्यपेयातां

तद्वद् भूतसमागमः रामायणे शोचमानास्तु सस्नेहाबांधवाः सुहृदस्तथा। पातयंति जनं स्वार्गादश्रुपातेन राघव ॥ श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः। भूरिद्युम्नोगतः स्वर्गं राजा पुण्येन कर्मणा ॥ सपुनर्बंधुवर्गस्य शोकव्याजेन राघव। कृत्स्ने च क्षयिते धर्मे पुनः स्वर्गान्निपातितः ॥ अतः शोकाग्निना दग्धः पिता ते स्वर्गतः प्रभोः। शपे त्वां मन्युनाविष्टः तस्मादुत्तिष्ट माशुच ॥ ततः पश्चादनवलोकयंतः कनिष्ठानग्रतः कृत्वा पंक्तीभूताग्राममायांत्यागम्य च गृहद्वारे स्थित्वा निंबपत्राणि दंतैरवखंड्याचम्योदकमग्निगोमयगौरसर्षपांस्तैलमित्यनुक्रमेणालभ्य पादेनाश्मानमाक्रम्य गृहं प्रविशंति ततः प्रभृति त्रिरात्रं यावत् ज्ञानिनां यमनियमाउच्यंते ब्रह्मचर्यमधः शयनं लौकिककर्माकरणमन्येषां कुरु इत्यप्रेरणं कृत्वा लब्ध्वा वा दिवैव भोजनं मांसवर्ज एते च नियमाः ज्ञातीनां पुत्रादीनां पुनर्यावदाशौचं अधमस्तेषां मध्ये प्रेतक्रियाधिकारी पुत्रादिः दशरात्रं यावत् प्रत्यहमेकैकमवयवपूरकं पिंडं प्रेताय दद्यात् आशौचदिनहानौ वृद्धौ वा दशैव पिंडान् दिनानि विभज्य दद्यात् कथं अमुकगोत्र अमुकशर्मन् प्रेत अवनेनिक्ष्व ततोदर्भानास्तीर्य अमुकगोत्र अमुकशर्मन् प्रेतैषते शिरःपूरकः पिंडोमयादीयतइति पिंडं दत्वा पूर्ववत्पुनरवनेजनं दत्वा ततोनुलेपनं पुष्पधूपदीपशीतलतोयऊर्णातंतुदानं पिंडे स्मृत्यंतरोक्तमपि कुर्यात् अथ यस्मिन्नहोरात्रे स म्रियते तस्यां रात्रौ मृन्मये क्षीरोदके कृत्वा यष्ट्यादिकमवलंब्याकाशे धारयेत्प्रेतात्र स्नाहि पिब क्षीरमित्यनेन मंत्रेण ततोद्वितीयादिषु नवसु दिनेषु प्रत्यहं अनेनैव विधिना एकैकं पिंडमवयवपूरकं दद्यात् ब्राह्मणः क्षत्रियश्च नवमेऽहानि नवमं पिंडं दत्वा दशमं द्वादशेहनि दद्यात् वैश्यश्चेत्पंचदशाऽहनि शूद्रश्चत्रिंशत्तमे तथैव एकैकमंजलिं एकैकं वर्द्धयेत्तत्र वाक्यं अमुकसगोत्र अमुकशर्मन् अमुकप्रेतएषते तिलतोयांजलिर्मयादत्त तवोपतिष्ठतां अमुकगोत्र प्रेतएतत्ते

तिलतोयांजलिर्मयादत्तः तवोपतिष्ठतां अमुकगोत्र प्रेत एतत्तेतिलतोयपात्रं मया दत्तं तवोपतिष्ठतां सद्यः शौचपक्षे तु एकस्मिन्नेव दिने क्रमेण रुशपूरकान् तथा पंच पचाशत्तोयांजलीन् पंचपंचाशत्तोयपात्राणि त्र्यहाशौचे पुनः प्रथमदिने त्रीन् पिंडान् षडंजलीन् षट् पात्राणि च दद्यात् द्वितीयदिने चतुरः पिंडान् रिक्तानांप्रेतानांनिर्हरणादिकं न कुर्यात् यथाह याज्ञवल्क्यः "आदिष्टीनोदकं कुर्याद्व्रतस्य तु समापनात् । समाप्तेतूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥ तथा आचार्य पित्रुपाध्यायान्निर्हृत्यापि व्रती शकटान्नं न च तैः सह संविशेत् इति यदि मोहात्करोति तदा व्रतात्च्यवते पुनरुपनयनेन शुद्ध्यति तथाऽस्थिसंचयनं ब्राह्मणस्य चतुर्थेऽहनि पंचमेहनि क्षत्रियस्य नवमे वैश्यस्य एकादशे शूद्रस्य त्र्यहाशौचे द्वितीयेन्हि सर्वेषां सद्यः शौचे तु दाहानंतरमेव तत्रास्थिसंचयननिमित्तं एकोद्दिष्टं विधाय पुष्पधूपनैवेद्यानि संभृत्य ॐ क्रव्यादमुखेभ्योदेवेभ्योनमइति अर्घादिपूजां कुर्यात् श्मशाने ततः नमः क्रव्यादमुखेभ्योदेवेभ्यइति बलिदानं तत्र मंत्रः देवायस्मिन् देव्याः स्युर्भवंतः सनातनाः 'तस्मात्सकाशाद्गृह्णीयुर्बलिमष्टांगमक्षयं' एवं बलिं कृत्वा विसर्जयेत् ततोऽपसव्यं पलाशवृंतेनास्थीनि परिवृत्यंगुष्टकनिष्ठाभ्यां आदाय पलाशपुटेधारयति तत्र शमीशैवालं कर्दमं च धारयति ततोघृतेनाक्तसर्वौषधीमिश्राण्यस्थीनि दक्षिणपूर्वायतान् यवाकारान् कर्षून् खात्वा तत्र कुशानास्तीर्य हरिद्रया पीतवस्त्रखंडं निपात्यैतद्वक्ष्यमाणमंत्रेण निक्षिपेत् ॐ वाचा मानसा आर्त्तेन ब्राह्मणाः त्रय्या विद्यया पृथिव्यामपार्ठ·रसेन निपिबाम्यसाइति मंत्रेण असौ स्थाने प्रेतनामादेशः ततः कुंभे निधाय तूष्णीं तं कुंभं अरण्यवृक्षमूले वा भूमौ खात्वा धारयेत् भस्म चितास्थितं सर्वमेव तोये निक्षिपेत् चिताभूमिं गोमयेन विलिप्य तत्र तेनैव पूर्वोक्तबलिमंत्रेण बलिं दद्यात् तं च बलिं क्षीरेणाभ्यज्य

देवताविसर्जयेत् चिताभूमिं छादनार्थं तत्र वृक्षं पद्दकं वा कारयेत् सभाविश्रामार्थं काष्टपाषाणविन्यासविशेषः पद्दकः कट्टहरः इतिकान्यकुब्जे प्रसिद्धः लोकाचारादेव कुटीं वा ततः कदाचिदस्थिकुंभं उत्पाद्यादाय तीर्थं गच्छेत् "अस्थीनि मातापितृवंशजानां नयंति गंगामपि ये कदाचित् । सद्बांधवास्थीनि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि" ॥ ततश्च गंगां गत्वा स्नात्वा ततः पंचगव्येन सिक्ता हिरण्यमध्वाज्यतिलैः संयोज्य ततस्तु मृत्पिंडे पुटे निधाय दक्षिणां दिशं पश्यन् नमोऽस्तु धर्मायेति वदन् जलं प्रविश्य समे प्रीतइत्यभिधाय गंगांभसि निक्षिप्य जलादुत्थाय सूर्यमवेक्ष्य विप्रमुख्याय यथाशक्ति दक्षिणां दद्यात् एवं कृते प्रेतक्रियाकर्त्रोः स्वर्गः स्यात् तथा चोक्तं "विगाह्य गंगां समियाय तोयमीहास्थिराशिं सकलैश्च गव्यैः । हिरण्यमध्वाज्यतिलैस्तु युक्तं ततस्तु मृत्पिंडपुटे निधाय ॥ यस्यां दिशि प्रेतगणोपगूढोविलोकयंस्तां सलिले क्षिपंतं । उत्तीर्य दृष्ट्वा रविमात्मशक्त्या सुदक्षिणां मुख्यद्विजाय दद्यात् ॥ एवंकृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्याच्च महेंद्रतुल्या । क्षीणेषु पुण्येषु पतन्दिविस्था नैवं व्युदस्य च्यवनं द्युलोकात् ॥ यावदस्थिमनुष्याणां गंगातोयेषु तिष्ठति तावद्वर्षसहस्राणि ब्रह्मलोके महीयते । यमः । गंगातोये च यस्यास्थि प्लवते शुभकर्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ गंगातोये च यस्यास्थि नीत्वा संक्षिप्यते नरैः । युगानां तु सहस्राणि तस्य स्वर्गे भवेद्गतिः ॥ मातुः कुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलोत्थस्य नीत्वा चांद्रायणाच्छुचिः" एतच्च द्रव्यादिलोभेन यतः नश्रेयोर्थिनः अथ साग्नेः पत्नी यदि जीवद्भर्तृका म्रियेत तदा केचिद्देशाचारात् क्षौरं नाहुः अन्योविधिः सर्वोयुक्तोभवति भर्त्तरि मृते यदि म्रियते तदा अरण्यंतरं संपाद्य ततोनिर्मंथ्येनाग्निना पात्रैर्विना तां दहेत् तदलाभे लौकिकाग्निना एवं पश्चान्मृतस्य पुंसोऽपि भवति अन्वारोहणे तु

प्रथमाहुतिः पात्रासादनं तु यजमानदेहे एव अथ यदि साग्नेः शवस्य दाहे क्रियमाणे वृष्ट्याद्याघातेनाग्निनाशे ऊर्द्धदग्धदेहशेषं वृष्टौ शांतायां अर्द्धदग्धा रणी निर्मथ्य तदलाभेर्द्धदग्धकाष्टं निर्मथ्य तदलाभे अश्वत्थादिपवित्रकाष्ठमथनोत्थेनाग्निना पुनर्दहेत् अथ प्रोषिते तु मृतेग्निहोत्रिणि तदस्थीन्यानीयोक्तविधिना त्रेतया पुनर्दहेत् अस्थ्नामप्यलाभे षष्ट्यधिकत्रिशतमिति पलाशवृंतान्युचित्य कृष्णसारचर्मणि पुरुषाकारेण प्रसारिते तदुपरि पुरुषाकारं प्रसार्य तत्र पलाशवृंतानि चत्वारिंशता दशभिर्ग्रीवा त्रिंशता उरः विंशत्योदरं शतेन भुजद्वयं दशभिर्हस्तांगुलीः षड्भिर्वृषणौ चतुर्भिः शिश्नं शतेनोरुद्वयं त्रिंशता जानुनी जंघे च दशभिः पादांगुलीः परिकल्प्योर्णसूत्रेण सम्यग्बध्वा तेनैव मृगचर्मणा संवेष्ट्य ऊर्णासूत्रेणैव बध्वा यवपिष्टजलेन संप्रलिप्य मंत्रपूर्वकं पूर्ववत्पात्रैर्दहेत एवं पर्णशरे दग्धे तस्य दैवात्पुनारगमने पुनराधानं कृत्वा आयुष्यार्थामिष्टिं कुर्यात् पर्णशरदाहानंतरं तु तदस्थ्नां लाभेऽर्द्धदग्धकाष्टाग्निमुत्पाद्य तेनाग्निनास्थीनि पुन र्दहेत् निरग्नेस्तु नास्ति संस्कारः एवं साग्नेः दहनदिनात् निरग्नेर्मरणदिनाद्गणना अथैषां प्रेतदेहानां रजस्वलादिस्पर्शे मृन्मये कुंभे पूर्णजले पंचगव्यं प्रक्षिप्य कृतस्नानं शवं तेनोदकेनाभिषिंचते आपोहिष्टेत्यादिभि रब्लिंगैर्मंत्रैर्वामदेव्यादिभिर्ऋग्भिस्तिसृभिरभिषिंचेत् एवं सूतिकां रजस्वलां चापि एकादशे चतुर्थेवाऽहनि प्रायश्चित्तं कृत्वा पंचगव्येन प्रक्षाल्य वाससा संवेष्ट्य उक्तविधिना दहेदिति एवंतावत्प्रेतायोद्दिश्य गोपश्वालंभो भिहितस्तत्प्रसंगादन्येपि यावंतः अर्घपशवस्तत्कर्माभिधातुमिदमारभ्यते

**पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखान्निहन्ति ॥ १ ॥ परीव्ययणोपाकरणानियोजनप्रोक्षणान्यावृताकुर्याद्यच्चान्यत् ॥ २ ॥ परिपश-**

**व्ये हुत्वा तूष्णीमपराः पंच ॥ ३ ॥ वपोद्धरण चाभिघारयेद्देवतांचादिशत् ॥ ४ ॥ उपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवं ॥ ५ ॥ वपार्ठहुत्वावदानान्यवद्यति ॥ ३ ॥ सर्वाणि त्रीणि पंच वा ॥ ७ ॥ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥ ८ ॥ पश्वंगं दक्षिणा ॥९॥ यद्देवते तद्दैवतं यजेत्तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति ॥ १० ॥ नद्यंतरे नावं कारयेन्न वा ॥ ११ ॥ ॥ ११ ॥**

**पशुश्चेदाल्पाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखां नि-**हंति चेद्यदि स्मार्त्तः पशुः क्रियते तदा तं पशुं गोपशुं आप्लाव्य स्नापयित्वा नियुंज्यात् गोपशौ आप्लाव्याभावः पशुनियोजनं यूपे श्रूयते अस्य कुत्रेत्यपेक्षायामाह अस्य अग्रेण पुरस्तात् अग्नीन् वितानपक्षे गार्हपत्यादीन् आवसथ्यपक्षे एकमग्निं परीत्य प्रादक्षिण्येन गत्वा पलाशस्य ब्रह्मवृक्षस्य शाखा तां निहंति निखनंति आसादनानंतरं यूपकार्यत्वाच्छाखायापरिव्ययणोपकारणनियोजनप्रोक्षणान्यावृत्या कुर्याद्यच्चान्यत् परिव्ययणत्रिगुणरशनया शाखायाः उपाकरणं तृणेन पशोः नियोजनं द्विगुणरशनया अंतरा शृंगबद्धस्य पशोः पलाशशाखायां बंधनं प्रोक्षणीभिरद्भिः पशोरासेचनं एतानि **परिव्ययणोपाकरणनियोजनप्रोक्षणानि आवृता** पशुप्रकरणविहितया मंत्रावर्जितया क्रियया कुर्यात् विदधीत न केवलमेतान्येव **अन्यदपि** संस्कारकं पशुसमंजनपर्यग्निकरणादिकं तथैव कुर्यात् **परिपशव्येन हुत्वा तूष्णीमपराः पंच** पशुसंज्ञपनं परि उभयतः हूयेते येते

परिपशव्ये स्वाहा देवेभ्यः देवेभ्यः स्वाहेति परिपशव्ये ते हुत्वा तूष्णीं मंत्रवर्जं अपराः अन्याः पंच आज्याहुतीर्जुहोति **वपोद्धरणं चाभिघारयेत्** पशोर्वपायाः उद्धरणं यथोक्तं कृत्वा तां वपां अभिघारयेत् उद्धृत्यैव **देवतां त्वादिशेदुपाकरणनियोजनप्रोक्षणेषु** उपाकरणं च नियोजनं च प्रोक्षणं च उपाकरणनियोजनप्रोक्षणानि तेषु देवतां. यद्दैवत्यः पशुर्भवति तां देवतां आदिशेत् अमुष्मै त्वा उपाकरोमि अमुष्मै त्वा नियुनज्मि अमुष्मै त्वा जुष्टं प्रोक्षामीति तंडुलप्रोक्षणे देवतोद्देशः **वपाꣳ हुत्वाऽवदानान्यवद्यति सर्वाणि त्रीणि पंच वा** वपां विधिना हुत्वा अवदानानि पशोः हृदयादीनि अवद्यति छिनत्ति कति सर्वाणि हृदयं जिह्वां क्रोडं सव्यबाहुपार्श्वद्वयं यकृत् वृक्यौ गुदमध्यं दक्षिणश्रोणिरित्येकादशप्रधानार्थानि दक्षिणबाहुं गुदतृतीयनिष्ठं सव्या श्रोणि इति त्रीणि सौविष्टकृतानि यद्वा त्रीणि हृदयं जिव्हां क्रोडानि अथ वा पंच हृदयजिव्हाक्रोडसव्यबाहुदक्षिणपार्श्वानि अत्र पंच अवदानपक्षे त्रीणि पक्षे वा तेभ्य एव स्विष्टकृद्यागः वपाꣳ हुत्वावदानान्यवद्यतीतिवदता सूत्रकृता पशुपुरोडाशोनिरस्तः **स्थालीपाकमिश्राण्यवदानानि जुहोति** स्थालीपाकेन चरुणा मिश्राणि संयुक्तान्यवदानानि जुहोति स्थालीपाकस्य श्रपणं वचनात्सहैव पाकः **पश्वंगं दक्षिणा** पशोः अंगं पश्वंगं दक्षिणा अस्य पशुबंधस्य **यद्दैवते तदेव तं यजेत्तस्मै च भागं कुर्यात् तं च ब्रूयादिममनुप्रापयेदिति** एतदर्घपशून्प्रकृत्य कर्माभिहितं तत्र यस्यार्घस्य आचार्यादेः या देवता तद्दैवतः सपशुयागः तस्मिंस्तद्दैवते यागे तद्दैवतं अर्घ्यदैवतं बृहस्पत्यादिकं च यजेत् तत्रार्घ्याः देवताः आचार्यस्य बृहस्पतिः ब्राह्मणश्चंद्रमाः उद्गातुः पर्जन्यः अग्निर्होतुः अश्विनावध्वर्योः विवाह्यस्य प्रजापतिः राज्ञइंद्रः प्रियस्य मित्रः स्नातस्य विश्वेदेवाः इंद्राग्नी वेति तस्मै च अर्घ्याय आचार्या-

दयोर्मार्गे च पशोः किंचिदंगं कुर्यात् तं च अर्घ्यं आचार्यादिकं इम-मनुप्रापयेति ब्रूयात् **नद्यंतरे नावं कारयेन्नवा** इदानीं प्रेतोद्देशेन गामप्येके घ्नन्तीति यदुक्तं तस्य देशविधानार्थमाह नद्यन्तरे नद्यनंतरे द्वीपे नावं नवं एकादशाहश्राद्धं तदर्थमिमं नावं गोपशुं कारयेत् अ-नुतिष्ठेत् कोर्थः प्रेतोद्देशेन गोपशुः एकादशेह्नि नद्यन्तरे आलभेत नवा आलभेत इति सूत्रार्थः ॥ एवं तावन्नद्यंतरे नावं कारयेदित्यनेन नवश्राद्धप्रयोजनपशुरुक्तस्तत्प्रसंगान्नैमित्तिकं पश्वन्तरं व्याख्यातुमाह।

**अथातोवकीर्णिप्रायश्चित्तं ॥ १ ॥ अमावा-स्यायां चतुष्पथे गर्दभंपशुमालभेत ॥ २ ॥ निर्ऋ-तिं पाकयज्ञेन यजेत ॥ ३ ॥ अप्स्ववदानहोमः ॥ ४ ॥ भूमौ पशुपुरोडाशश्रपणं ॥ ५ ॥ तां छविं परिदधीत ॥ ६ ॥ ऊर्द्ध्ववालामित्येके ॥ ७ ॥ सम्वत्सरंभिक्षाचर्यंचरेत्स्वकर्मपरिकीर्त्तयन् ॥ ८ ॥ अथापरमाज्याहुतीर्जुहोति । कामावकीर्णोस्म्यव-कीर्णोस्मिकामकामाय स्वाहा। कामाभिदुग्धोस्म्य-भिदुग्धोस्मि कामकामाय स्वाहेति ॥ ९ ॥ अथो-पतिष्ठते सम्मासिंचतु मरुतः समिन्द्रः सम्बृह-स्पतिः सं मायमग्निः सिञ्चतु प्रजया च धनेन चेति ॥ १० ॥ एतदेव प्रायश्चित्तम् ॥ ११ ॥ १२ ॥**

अथातोवकीर्णिप्रायश्चित्तं अथ इदानीं यतः पशुरभि-हितः अतस्तत्प्रसंगात् अवकीर्णिनः स्वलितब्रह्मचर्यस्य ब्रह्म-चारिणः प्रायश्चित्तं शुद्धिसंपादकं कर्म व्याख्यास्यते आमावा-

**स्यायां चतुष्पथे गर्दभं पशुमालभते** ॥ योब्रह्मचारी सन् अवकीर्णी भवति स्त्रीगमनात् सः अमावास्यायां कस्यांचित् कृष्णपंचदश्यां चतुष्पथे चत्वारः पंथानः यत्र असौ चतुष्पथः तस्मिन् चतुष्पथे देशे गर्दभं रासभं पशुं आलभते संज्ञपयति ॥ **निर्ऋतिं पाकयज्ञेन यजेत्** निर्ऋतिं पाकयज्ञविधानेन पशुना यजेत् तत्रावकीर्णिनः अन्योपि हविर्यज्ञरूपः पशुरस्ति तेन हेतुना पाकयज्ञेन यजेत् इत्युक्तं **अप्स्ववदानहोमः** अप्सु जलेऽवदानानां होमः प्रक्षेपोदेवतोद्देशेन भवति नाग्नौ अवदानग्रहणात् आवारादीनां लौकिकाग्नावेव होमः **भूमौ पशुपुरोडाशश्रपणं** भूमौ एव न कपालेषु पुरोडाशस्य श्रपणं पाकोभवति शाखापशौ पुरोडाशाभावात् इहापूर्वपुरोडाशोऽर्थात् विधीयते तस्य च संस्कारः आज्येन सह क्रियते **तां छविं परिदधीतोर्द्ध्ववालामित्येके संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्त्तयन्** तां आलब्धस्य गर्दभस्य छविं कृत्तिं परिदधीत प्रोर्णुवीत आच्छादयीतेति यावत् एके आचार्याः तां ऊर्द्ध्ववाला उपरिपुच्छां परिदधीतेति वर्णयंति अपरे तिर्यग्बालं ततश्च विकल्पः गर्दभपश्वालंभानंतरं तच्छविं परिदधानः संवत्सरं यावद्भिक्षाचर्यं चरेत् किंकुर्वन् **स्वकर्म परिकीर्त्तयन्** अवकीर्णित्वं कथयन् अहमवकीर्णी भवति ! भिक्षां देहीत्येवं स्वकर्मपरिख्यापनं कुतइतिचेत् निरुक्तं वा एनः कनीयोभवति इति श्रुतेः **अथापरमाज्याहुतीर्जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिदुग्धोऽस्मि कामकामाय स्वाहेति** अथ इदानीं अपरं अन्यत् प्रायश्चित्तं अवकीर्णिनोविधीयते कामावकीर्णोस्मि कामाभिदुग्धोस्मीत्येताभ्यां प्रतिमंत्रमाज्याहुतीर्जुहोति इदं कामायेति त्यागः ते च द्वे आगंतुत्वाच्चतुर्द्दशाहुत्यंते आगंतूनामंते निवेशइति न्यायात् **अथोपतिष्ठते सम्मासिंचंतु मरुतः शमिंद्रः शं बृहस्पतिः संमायमग्निः सिंचंतु प्रजया**

धनेन चेति एतदेव प्रायश्चित्तं ॥ अथ होमानंतरमुपतिष्ठते ऊर्द्ध्वीभूय समासिंचंत्वित्यादि सौत्रमंत्रेण लिंगोक्तादेवताः प्रार्थयते संवत्सरमित्यत्राप्यनुवर्त्तते अतः प्रतिदिनं पंचभूसंस्कारपूर्वकं लौकिकाग्निं स्थापयित्वा आघारादिस्विष्टकृदंताश्चतुर्दशाहुतीर्हुत्वा कामावकीर्णोस्मि कामावदुग्धोस्मीत्येताभ्यां प्रतिमंत्रं आज्याहुतिद्वयं हुत्वा समासिंचंत्विति मंत्रेण उपतिष्ठति संवत्सरं यावत् एतदेव यदुक्तं गर्दभपश्वालंभरूपं आज्याहुतिहोमात्मकं च अवकीर्णिनः प्रायश्चित्तद्वयं विज्ञेयं इति सूत्रार्थः ॥

अथातःसभाप्रवेशनं ॥ १ ॥ सभामभ्येति सभाङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नमइति ॥ २ ॥ अथप्रविशति सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ ॥ योमा न विद्यादुपमासतिष्ठेत्सचेतनोभवतु शठेसथेजनइति ॥ ३ ॥ पर्षदमत्ये जपेदभिभूरहमागमं विराडप्प्रतिवाच्यः ॥ अस्याःपर्षदईशानः सहसा सुदुष्टरोजनइति ॥ ४ ॥ सयदि मन्येत क्रुद्धोयमिति तमभिमंत्रयते यातएषा रराट्यातनूर्मन्योः क्रोधस्य नाशनी ॥ तां देवाब्रह्मचारिणोविनयंतु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ भविते क्रोधं न यामसि गर्भमश्वतर्यसहासाविति ॥ ५ ॥ अथ यदि मन्येत दुग्धोयमितितमभिमंत्रयते तां ते वाचमस्या

**आदत्ते हृदयआदधे यत्र यत्र निहिताक्तां ततस्ततस्तआदधे यदहं ब्रवीमि तत्सत्यमधरोमत्यद्यस्वेति ॥ ६ ॥ एतदेव वशीकरणम् ॥ ७ ॥ १३ ॥**

**अथातः सभाप्रवेशनं ॥** अथावसथ्याग्निकर्मसाध्यविधानानंतरं साधारणानि कर्माणि अनुविधेयानि यतः अतोहेतोः सभाप्रवेशनं कर्म व्याख्यायते **सभामभ्येति । सभांगिरसि नादिर्नामासित्विषिर्नामासि तस्यै ते नमइति** यदा द्विजः सभां गच्छति तदा सभां अभि आभिमुख्येन एति केन मंत्रेण सभांगिरसीत्यादिना **अथ प्रविशति सभा च मासमितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ योमा न विद्यादुपमासतिष्ठेत्सचेतनो भवतु शंठसथे जनइति** अथाभिमुखं एत्य सभा च मासमित्यादिना मंत्रेण सभां प्रविशति **पर्षदमेत्य जपेत्** पर्षदं सभां प्रत्येत्यप्रविश्य **अभिभूरहमागमंविराडप्रतिवाच्यः अस्याः परिषदइशानः सहसा सुदुष्टरो जनइति** पर्षदं सभां प्रविष्टः यदि चेन्मन्येत जानीयात् अयं सभापतिः क्रुद्धइति तं क्रुद्धं अभिलक्षीकृत्य मंत्रयते क्रोधापनयनायपातएषा राधा रंराध्या तनूर्मन्योः क्रोधस्य नाशनी तां देवाब्रह्मचारिणोविनयंतु सुमेधसः द्यौरहं तौ ते क्रोधं नयामसि गर्भमश्वतर्या सहासावित्यनेन मंत्रेण असाविति क्रुद्धस्य नाम ॥ **अथ यदि मन्येत दुग्धोयमिति तमभिमंत्रयते तां ते वाचमित्यादि ॥** अथ यदि गोदोहस्य कर्त्ता अयं मन्येत तर्हि **तां ते वाचमास्य आदत्ते हृदयआदधे यत्र यत्र निहिता वाक् तां ततस्ततआददे यदहं ब्रवीमि तत्सत्यमधरोमत्यद्यस्व** इत्यनेन मंत्रेण अनुमंत्रणं अवशस्य वशीकरणं इति सूत्रार्थः ॥

**अथातोरथारोहणं ॥ १ ॥ युंक्तेति संप्रेष्य युक्तइत्युक्ते साविराडित्येत्यचक्रे अभिमृशति ॥ २ ॥**

रथंतरमसीति दक्षिणं ॥ ३ ॥ बृहदसीत्युत्तरं ॥ ४ ॥ वामदेव्यमसीति कूबरीम् ॥ ५ ॥ हस्तेनापस्थे-मभिमृशतिअंकौन्यंकावभितोरथं यौ ध्वांतं वाताग्रमनुसंचरंतौ दूरे हेतिरिन्द्रियावान्पतत्रिस्ते नोग्नयःपप्रयःपारयन्त्विति ॥ ६ ॥ नमोमाणिचरायेतिदक्षिणं धुर्य्यंप्राजति ॥ ७ ॥ अप्राप्य देवताः प्रत्यवरोहेत्संप्रति ब्राह्मणान्मध्ये गाअभिक्रम्य पितृन् ॥ ८ ॥ नस्त्रीब्रह्मचारिणौ सारथी स्यातां ॥ ९ ॥ मुहूर्त्तमतीयाय जपेदिहरतिरिह रमध्वं ॥ १० ॥ एके मास्त्विह रंत्विति च ॥ ११ ॥ सयदि दुर्बलोरथः स्यात्तमास्थाय जपेदयं वामाश्विनारथोमादुर्गे मास्तरोषदिति ॥ १२ ॥ सयदि भ्रंश्यात्स्तंभमुपस्पृश्य भूमिं वा जपेदेषवामाश्विना रथोमादुर्गे मास्तरोरिषादिति ॥ १३ ॥ तस्य नकाचनार्त्तिर्न्नरिष्टिर्भवाति ॥ १४ ॥ यात्वाध्वानं विमुच्य रथं यवसोदके दापयेदेषउहवाहनस्यानपह्नवइति श्रुतेः ॥ १५ ॥ १४ ॥

अथातोरथारोहणं अथ कार्यार्थं जिगमिषोः द्विजस्य यतो यानारोहणं तावत् व्याख्यायते युक्तेति संप्रेष्य युक्तइत्युक्ते साविराडित्यचक्रे अभिमृशति रथांतरमसीति दक्षिणं बृहदसीत्युत्तरं तत्र युक्तेति सारथिं संप्रेष्याऽऽज्ञाप्य ततः प्रेषितेन सारथिना युक्तोरथइति प्रोक्ते सति सा विराट् इत्यनेन मंत्रेण एत्य

रथसमीपमागत्य चक्रे रथांगे अभिमृशति कथं रथंतरं अस्मि इत्यनेन दक्षिणं बृहदसीत्यनेनोत्तरं चक्रं वामदेव्यमसीति मंत्रेण कूबरीं ईषादंडाग्रं अभिमृशतीत्यनुवर्त्तते **हस्तेनोपस्थमभिमृशति** उपस्थं रथमध्यं उपवेशनस्थानं अभिमृशति आलभते हस्तेनेतिसर्वत्र तत्र मंत्रः **अकौन्यंकावभितोरथं यौवातं वाताग्रमनुसंचरंतौ दूरे हेतिरिंद्रियावान्पतत्रिस्तेनाग्नयः पप्रयः पारयंत्विति नमोमाणिचरायेति दक्षिणंधुर्यं प्राजति** गवां मध्ये स्थापयति नमोमाणिचरायेत्यनेन दक्षिणधुर्यं दक्षिणधुरायां युक्तं वृषभं प्राजति प्रतोदेन प्रेरयति तूष्णीं वामं गवां मध्ये स्थापयति **अप्राप्य देवताः प्रत्यवरोहेत् संप्रति ब्राह्मणान्मध्ये गाअभिक्रम्य पितॄन्** प्राप्य अनासाद्य दूरतएव देवताहरिहरब्रह्मादिकाः प्रति अवरोहेत् रथादवरोहेत् संप्रति ब्राह्मणान् संप्रति निकटे प्रत्यवरोहेत् मध्ये गाः सुरभीः प्राप्य मध्ये प्रत्यवरोहेत् अभिक्रम्य पितॄन् अभिमुखमेत्य पितॄन् मित्रादीन् मान्यान् प्रत्यवरोहेत् **न स्त्रीब्रह्मचारिणौ सारथी स्यातां** स्त्रीनारी ब्रह्मचारी उपकुर्वाणकोनैष्ठिकश्च स्त्रीब्रह्मचारिणौ सारथी न स्यातां न भवेतां **मुहूर्त्तमतीयाय जपेदिह रतिरिहरमध्वमेके मास्त्विहरतिरिति च** मुहूर्तं क्षणं अभीयाय अभ्येत्य जपेत् इहरतिरित्यादिकं मंत्रं **सयदि दुर्बलोरथः स्यात्तमास्थाय जपेत्** सः रथी यदि चेदध्वानं गच्छन् दुर्बलः क्षीणोरथोऽस्येति दुर्बलरथः स्यात्तदा यं रथं आस्थाय आरुह्य वक्ष्यमाणं मंत्रं जपेत् **अयं वामश्विनारथोमा दुर्गेमास्तरोरिषत् इति सयदि भ्रम्याद्धुमार्ठ स्तंभमुपस्पृश्य भूमिं वाजपेदेषवाश्विनारथोमा दुर्गेमास्तरोरिषदिति** सरथः यदि पुनः भ्रम्यात् चलते कुटिलो भवेत् तथा स्तंभं रथध्वजदंडं उपस्पृश्य जपेत् एषा वामश्विनारथइति मंत्रं **तस्य न काचनार्त्तिर्भवति** तस्य रथिनः न काचन आर्त्तिः

पीडा न च रिष्टिरुपसर्गोभिवति य एवं दुर्बलः रथः उद्भ्रान्तरथोवा जपति यात्वाध्वानं विमुच्य रथं यवसोदके दापयेदेषउवाहनस्यानपह्नवइति श्रुतेः यात्वा गत्वा अध्वानं मार्गं विमुच्य मुक्त्वा किं रथं रथयुक्तं वाहं यवसोदके यवसं च उदकं च यवसोदके घासपानीये ते दापयेत् यवसोदके दीयेतामिति भृत्यान् प्रेषयेत् कुतः एषउवाहनस्य अश्वादेः अपह्नवः क्षमापने इति श्रुतेः वचनात् एषकः कस्मात् येन वाहनेन धावयेद्विमुच्य ब्रूयात् पाययतैतत्सुहितं कुरुतेति सूत्रार्थः ॥

अथातोहस्त्यारोहणं ॥ १ ॥ एत्य हस्तिनमभिमृशति हस्तियशसमसिहस्तिवर्चसमसीति ॥ २॥ अथारोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेति ॥ ३ ॥ एतेनैवाश्वारोहणं व्याख्यातं ॥ ४ ॥ उष्ट्रमारोक्ष्यन्नभिमंत्रयतेत्वाष्ट्रोसि त्वष्टृदैवत्यः स्वस्ति मा संपारयेति ॥ ५ ॥ रासभमारोक्ष्यन्नभिमंत्रयते शूद्रोसिशूद्रोजन्माग्नेयोवै द्विरेताः स्वस्ति मा संपारयेति ॥ ६ ॥ पन्थानमभिमंत्रयते नमोरुद्राय पथिषदे स्वस्ति मा संपारयेति ॥ ७ ॥ चतुष्पथमभिमंत्रयते नमोरुद्राय चतुष्पथसदे स्वस्तिमासंपारयेति ॥ ८ ॥ नदीमुत्तरिष्यन्नभिमंत्रयते नमोरुद्रायाप्सुषदे स्वस्ति मा संपारयेति ॥ ९ ॥ नावमारोक्ष्यन्नभिमंत्रयतेसुनावमिति ॥ १० ॥ उत्तरिष्यन्नभिमंत्रयतेसुत्रामाणमिति ॥ ११ ॥ वनमभि-

मंत्रयते नमोरुद्राय वनसदे स्वस्ति मा संपारयेति ॥ १२ ॥ गिरिमभिमंत्रयते नमोरुद्राय गिरिषदे स्वस्ति मा संपारयेति ॥ १३ ॥ श्मशानमभिमंत्रयते नमोरुद्राय पितृषदे स्वस्ति मा संपारयेति ॥१४॥ गोष्ठमभिमंत्रयते नमोरुद्राय शकृत्पिंडसदे स्वस्ति मा सम्पारयेति ॥ १५ ॥ यत्रचान्यत्रापि नमोरुद्रायेत्येव ब्रूयाद्रुद्रोह्येवेदꣳ सर्वमिति श्रुतेः ॥ १६ ॥ सिचावधूतोऽभिमंत्रयतेसिगासि न वज्रोसि नमस्तेऽअस्तु मामाहिꣳसीरिति ॥ १७ ॥ स्तनयित्नुमभिमंत्रयते शिवानोवर्षाः संतु शिवानः संतु हेतयः शिवानस्ताः सन्तु यास्त्वꣳ सृजसि वृत्रहन्निति ॥ १८ ॥ शिवां वाश्यमानामभिमंत्रयते शिवोनामेति ॥ १९॥ शकुनिं वाश्यमानमभिमंत्रयते हिरण्यवर्ण शुकने देवानां प्रहितंगम ॥ यमदूत नमस्तेऽस्तु किन्त्वाकाक्कारिणोब्रवीदिति ॥ २० ॥ लक्षण्यं वृक्षमभिमंत्रयते मा त्वाशनिर्म्मा परशुर्मावातोमाराजप्रेषितोदंडः ॥ अंकुरास्ते प्ररोहंतु निवाते त्वाभिवर्षंतु अग्निष्टे मूलम्माहिꣳसीत्स्वस्तितेऽस्तुवनस्पते स्वास्तिमेऽस्तु त्वनस्पतइति ॥ २१ ॥ सयदि किंचिल्लभेत्तत्प्रतिगृह्णाति द्यौस्त्वा ददातु

पृथिवी त्वा प्रतिगृह्णात्विति सास्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति अथ यद्योदनंल्लभेत्तत्प्रतिगृह्य द्यौस्त्वेति तस्य द्विः प्राश्नाति ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा प्राश्नात्विति ॥ २३ ॥ अथ यदि मन्थंल्लभेतत्तत्प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वा प्प्राश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ २४ ॥ १५ ॥

॥ **अथातोहस्त्यारोहणं** ॥ अथ रथारोहणानंतरं रथेधिकृतस्य हस्त्यारोहणमप्यपेक्षितं भवति अतोहेतोः हस्त्यारोहणं व्याख्यायते **एत्य हस्तिनमभिमृशति** एत्य हस्तिसमीपमागत्य हस्तिनं गजं अभिमृशति आलभते वक्ष्यमाणेन मंत्रेण **हस्तियशसमसि हस्तिवर्चसमसीति** मंत्रेण **अथारोहतींद्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेति** अथ अभिमर्शनानंतरं आरोहति हस्तिनं इंद्रस्यत्वेति मन्त्रेण **एतेनैवाश्वारोहणं व्याख्यातं** एतेन हस्त्यारोहेणैवाऽश्वारोहणं व्याख्यातं कथितं अतश्च अश्वसमीपमेत्य अश्वमभिमृशति अश्वयशसमस्यवश्वर्चसमसीतिमंत्रेण ततोश्वमारोहंतींद्रस्य त्वा वज्रेणाभितिष्टामि स्वस्ति मा संपरयेत्यनेन मंत्रेण **उष्ट्रमारोक्ष्यन्नभिमंत्रयते त्वाष्ट्रोसि त्वष्टृदेवत्यः स्वस्ति मा संपारयेति** उष्ट्रं च क्रमेलकं आरोढुमिच्छन् अभिमंत्रयते त्वाष्ट्रोसीत्यादिना मंत्रेण **रासभमारोक्ष्यन्नभिमंत्रयते शूद्रोसि शूद्रजन्माग्ने योवै द्विरेताः स्वस्ति मा संपारयेति** रासभं गर्दभं आरोढुमिच्छन् शूद्रोसीत्यादिना मंत्रेणाभिमंत्रयते नमोरुद्रायेत्यादि चतुष्पथं चत्वारः पंथानोयस्मिन् सचतुष्पथः तं चतुष्पथं चतुर्मार्गाभिसरणप्रदेशस्तं एत्य **नमोरुद्राय**

**चतुष्पथसदे स्वस्ति मा संपारयेत्य**नेन मंत्रेण **नदीमुत्तरिष्यन्नभिमंत्रयते नमोरुद्रायाप्सुषदे स्वस्ति मा संपारयेति** नदीं स्रवंतीं उत्तरिष्यन् पारं गंतुमिच्छन् नमोरुद्रायाप्सुषदइत्यादिना मंत्रेणाभिमंत्रयते **नावमारोक्ष्यन्नभिमंत्रयते सुनावमिति** नावं तरीं आरोढुमिच्छन् सुनावमारोहेत्यनयर्चाऽभिमंत्रयते **उत्तरिष्यन्नभिमंत्रयते सुत्रामाणमिति** उत्तरिष्यन्नुत्तर्तुं प्रत्यवरोढुं इच्छन् तामेवाभिमंत्रयते सुत्रामाणमित्यनयर्चा **वनमभिमंत्रयते नमोरुद्राय वनसदे स्वस्ति मा संपारयेति** वनं काननं प्रवेष्टुकामः नमोरुद्राय वनसदइत्यादिना मंत्रेणाभिमंत्रयते **गिरिमभिमंत्रयते नमोरुद्राय गिरिषदे स्वस्ति मा संपारयेति** गिरिं पर्वतं आरोढुकामोऽभिमंत्रयते नमोरुद्राय गिरिषदइति मंत्रेण **श्मशानमभिमंत्रयते नमोरुद्राय पितृषदे स्वस्ति मा संपारयेति** श्मशानं प्रेतदहनभूमिं कार्यवशात्प्राप्य नमोरुद्राय शकृत्पिंडसदे स्वस्ति मा संपारयेति नमोरुद्राय पितृषदइत्यादिना मंत्रेणाभिमंत्रयते **गोष्ठमभिमंत्रयते नमोरुद्राय शकृत्पिंडसदे स्वस्ति मा संपारयेति** गोष्ठं गोवाटं नमोरुद्राय शकृत्पिंडसदेइत्यादिना मंत्रेणाभिमंत्रयते **यत्र चान्यत्रापि नमोरुद्रायेत्येव ब्रूयाद्रुद्रोह्येवेदꣳसर्वमिति श्रुतेः** यत्र येषु अन्येष्वपि अनुक्तकार्येषु पूर्वं नमोरुद्रायेत्येव ब्रूयात् पश्चात्तत्कार्यं कुर्यात् हि यस्मात् इदं सर्वं रुद्रएव इति श्रुतेः वेदवचनात् **सिचावधूतोभिमंत्रयते सिगसीत्यादि** सिचा वस्त्रप्रांतेनाऽवधूतः तत्वाताहतः सिचमभिमंत्रयते वक्ष्ययामेन मंत्रेण **सिगसि नवज्रोसि नमस्ते अस्तु मामाहिꣳसी** रित्यनेन मंत्रेण **स्तनयित्नुमभिमंत्रयते शिवानोवर्षा** इत्यादि स्तनयित्नुं मेघं गर्जंतं **शिवानोवर्षाः संतु शिवानः संतु विद्युतः शिवानस्ताः संतु यास्त्वꣳसृजसि वृत्रहन्नि**त्यनेन मंत्रेण अभिमंत्रयते **शिवां वाश्यमानामभिमंत्रयते** शिवां सृगालीं वाश्यमानां शिवोनामासीत्यादिना मामाहिꣳ-

सीरित्यनेन मंत्रेणाभिमंत्रयते **शकुनिं वाश्यमान मभिमंत्रयते हिरण्यपर्णे**त्यादि शकुनिं पक्षिणं कृष्णकमिति यावत् वाश्यमानं कूजंतं वक्ष्यमाणमंत्रेण **हिरण्यपर्ण शकुने देवानां प्रहितंगमः । यमदूत नगस्तेऽस्तु किं त्वा कार्काणोब्रवी**दित्यनेन मंत्रेणाभिमंत्रयते **लक्षण्यं वृक्षमभिमंत्रयते मात्वाशनि**रित्यादिलक्षण्यं वृक्षं शोभनं मंगल्यं आम्रादिकं आसाद्य **मात्वाशनिर्मा परशुर्मा वातोमाराजप्रेषितोदंडः अंकुरास्ते प्ररोहंतु निवाते त्वाभिवर्षतु अग्निष्ठे मूलं माहिꣳसीः स्वस्ति ते अस्तु वनस्पतइ**त्यनेन मंत्रेणाभिमंत्रयते **सयदि किंचित्** लभेत्तत्प्रतिगृह्णाति **द्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णात्विति अथ यद्योदनं लभेत्तत्प्रतिगृह्य द्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णात्विति** अथ कदाचित् यदि ओदनं भक्तं लभेत प्राप्नुयात्तदातं प्रतिगृह्यद्यौस्त्वा मंत्रं पठेत् मंत्रपाठस्तु आदानानंतरं सर्वत्र स्वसत्तापत्तये **तस्य द्विः प्राश्नाति** इति प्रथमं ब्रह्मा त्वाश्नातु तस्य लब्धस्योदनसिद्धिः द्विवारं प्राश्नाति अत्ति कथं **ब्रह्मा त्वा प्राश्नात्विति द्वितीयं स यदि मंथं लभते** द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति तत्प्रतिगृह्य **तस्य त्रिः प्राश्नाति ब्रह्माप्राश्नातु ब्रह्मात्वाश्विति** सद्विजः यदि मंथं दधिमंथं प्राप्नुयात्तदाय द्योरत्वेत्यनेन प्रतिगृह्य स्वीकृत्य तस्यमंथस्य त्रिस्त्रीन्वारान्प्राश्नाति ब्रह्मात्वांप्राश्नात्विति प्रथमं ब्रह्मातत्वांप्राश्नात्वितिद्वितीं **ब्रह्मा त्वा पिबत्विति** तृतीयमिति त्रिभि र्मंत्रैः ॥

**अथातोधीत्याधीत्यानिराकरणं प्रतीकम्मे विचक्षणं जिह्वा मे मधु यद्वचः ॥ कर्णाभ्यां भूरि शुश्रुवे मात्वꣳहार्षीः श्रुतम्मयि ॥ ब्रह्मणः प्रवचनमसि ब्रह्मणः प्प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसिशां-**

तिरस्यनिराकरणमसि ब्रह्मकोशं मे विशं। वाचा त्वा पिदधामि वाचा त्वापिदधामि स्वरकरणकंठयौरसदंत्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्म्मयि भवतु आप्यायंतु मेंगानि वाक्प्राणश्चक्षुः श्रोत्रं यशोबलम् ॥ यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥१६॥

इतिश्रीपारस्कराचार्यकृतं कातीयगृह्यसूत्रं समाप्तम्

अथातोऽधीत्याधीत्य अनिराकरणं अथ इदानीं द्विजानां प्रतिदिनमध्ययनं विहितं अतः कारणात् अधीत्याधीत्य पठित्वा पठित्वा अनिराकरणं अपरित्यागः कर्त्तव्यः वक्ष्यमाणनिगदेन तद्यथा प्रतीकं मे विचक्षणं जिव्हा मे मधु यद्वचः । कर्णाभ्यां भूरि शुश्रुवे मात्वंहार्षीः श्रुतमपि ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोसिसनिरसि शांतिरस्यनिराकरणमसि ब्रह्मकोशं मे विश वाचा त्वा पिदधामि वाचा त्वापिदधामि तिष्ठ स्वरकरणाकंठयौरसदंतोष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवत्वाप्यायंतुमेंऽगानि वाक्प्राणः चक्षुः श्रोत्रं यशोबलं यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठत्विति अस्यार्थः प्रतीकं मुखं मे मम विचक्षणं साधु शब्दोच्चारणसमर्थं मे मम जिव्हा यद्वचोमधुरं स्रवत् तद्वदत्विति शेषःएवमभीप्सितः शेषः सर्वत्र पूरणीयः कर्णाभ्यां भूरि शुश्रुवे श्रृणुयां अहं मात्वं हार्षिर्मयि विषये यत् श्रुतं अधीतं पठितं वर्त्तते तत्वं माहार्षीः मापनय मयि विषये ब्रह्मणोवेदस्य प्रवचनं अध्ययनं वा असि भवसि भवत्वित्यर्थः तथा ब्रह्मणोवेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः असि मयीत्यनुवर्त्तते ब्रह्मकोशोऽसि ब्राह्मणः शब्दरूपस्य कोशः गोपनगृहं गुप्तिस्थानं मयि असि

तथा सनि सम जीवनं असि तथा शांतिरसि शांतिरसि शांतिःअनिष्टस्य अनिष्टहेतोश्च शमनमसि तथा निराकरणं निराकृतः परित्यागः न निराकरणं अनिराकरणमसि ब्रह्मणः कोशं मे विश मे मम ब्रह्मकोशं हृदयं विश सर्वेषां वेदानाꣳ हृदयमेकायनमिति श्रुतेः वाचा गिरा त्वा त्वां अपिछादयामि स्वराः उदात्तानुदात्तस्वरिताः करणानि शब्दोत्पत्तेः शब्दाभिव्यक्तेर्वा साधनानि उरः कंठः शिरोजिव्हा मूलदंतनासिकोष्ठतालूनि इत्यष्टौ कंठे भवाः कंठ्याः अवर्णहकारवर्णविसर्गाः उरसि भवा औरसा हकाररहिताः वर्गपंचमांतस्थाः दंतेषु भवा दंत्याः लृवर्णत वर्गसकाराः ओष्ठे भवाओष्ठ्याः उवर्णपवर्गोपध्मानीयाः स्वराश्च करणानि च कंठ्याश्च औरसाश्च दंत्याश्च ओष्ठ्याश्च स्वरकरणकंठ्यौरसदंत्योष्ठ्याः एतेषां ग्रहणं उपादानं धारणं स्थिरीकरणं उच्चारणं प्रयोगग्रहणधारणोच्चारणानि तेषु मयि शक्तिर्भवतु स्वरादीनां धारणादि मयि सामर्थ्यमस्तु मे मम अंगानि गात्राणि आप्यायंतु वर्द्धतां न केवलमंगानि किंतु वाक् गीः प्राणोघ्राणेंद्रियं प्राणो वायुसूत्रात्मेति यावत् चक्षुः नयनेंद्रियं श्रोत्रं श्रवणेंद्रियं यशः कीर्त्तिः बलं शारीरमोजः एतान्यपि वागादीनि चाप्यायंत्वित्यनुषंगः यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु यन्मे मया श्रुतं मीमांसादि अधीत्य ऋगादि तत्सर्वं मे मनसि तिष्ठतु स्थिरीभवतु अत्र वीप्सा अर्थभूयस्त्वप्रतिपादनार्था ग्रंथसमाप्तिज्ञापनार्था वा ॥ ॥ इतिसूत्रार्थः ॥ इत्यग्निहोत्रिहरिहराणांकृतिरियं ॥

अथपृष्टोदिवि विधानं ॥ अथ परिशिष्टोक्तं पृष्टोदिवि विधानं वक्ष्यामि केशांतादूर्ध्वमपत्नीकउत्सन्ननिरग्निकोऽप्रवासी वा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अन्वग्निरित्यनयर्चाग्निमाहृत्य पंचभूसंस्कारं कृत्वा पृष्टोदिवि पृष्टोअग्निः पृथिव्यामित्यनयर्चाग्नेः स्थापनं व्याहृतिभिः ताꣳसवितुः तत्सवितुर्विश्वानि देवसवितरित्येताभिस्तिसृभिः

